कमाला सं० ५३



# त्र-मञ्जूषा

आधुनिकपद्धत्या पत्रलेखनविषये
ार्गदर्शिका अभिनवा रचना








सार्वभौम संस्कृत प्रचार कार्यालयः
वाराणसी

संस्कृत प्रचार पुस्तकमाला सं० ५३

# पत्र-मञ्जूषा

संस्कृते आधुनिकपद्धत्या पत्रलेखनविषये मार्गदर्शिका अभिनवा रचना

171




1432

लेखकाः

वासुदेव द्विवेदी शास्त्री

धर्मदत्त चतुर्वेदी व्या० आचार्यः, एम० ए०

सार्वभौम संस्कृत प्रचार कार्यालयः

वाराणसी

प्रकाशक:

सार्वभौम संस्कृत प्रचार कार्यालयः
डी० ३८/११० हौजकटोरा
वाराणसी ।

आवृत्तिः : प्रथमा

संख्या : एक सहस्रम्

मूल्यम् : रूप्यकत्रयम्, त्रिंशत् पणाश्च

मुद्रक—
सुदर्शन मुद्रक
६३/४२, उत्तर बेनिया बाग,
वाराणसी ।

 171




# आवश्यक-निवेदनम्

सामाजिकजीवने पत्रव्यवहारस्य महती उपयोगिता वर्तते। पत्राणि च तादृशानि एव उपयोगीनि, महत्त्वपूर्णानि, आकर्षकाणि, कार्यसिद्धौ सहायकानि च भवन्ति येषां भाषा शुद्धा सरसा हृदयग्राहिणी च भवति तथा भावाः अपि स्पष्टाः औचित्यमण्डिताः पूर्वापरसङ्गताश्च भवन्ति। अनया दृष्ट्या पत्रलेखनं नाम एका कला अस्ति यया परिचितानां लेखकानां पत्रलेखनं समधिकं प्रशंसनीयं लाभकरं च भवितुमर्हति। अतएव सम्प्रति पत्रलेखनविषये सर्वासु भाषासु अनेकानि पुस्तकानि प्रकाशितानि दृश्यन्ते येषाम् अध्ययनेन पाठकाः अस्यां कलायां कुशलाः भवन्ति पत्राणां सम्यग लेखनेन च आत्मनस्तथा अन्येषाम् अपि हितं साधयन्ति।

अस्मिन् प्रसङ्गे महता खेदेन इदं लेखनीयं भवति यत् संस्कृते पत्र-लेखनविषयम् अधिकृत्य वर्तमानरीत्या लिखितानां पुस्तकानां महान् अभावः वर्तते। प्राचीनसाहित्ये यद्यपि सन्ति कानिचित् अमुद्रितानि कानिचित् च मुद्रितानि अपि पुस्तकानि येषु पत्राणां बहवः प्रकाराः प्रदर्शिताः दृश्यन्ते।[1] एतदतिरिक्तं पुस्तकेषु एषु पत्राणां भेदाः, शैलीनां प्रकाराः, सम्बोधनानां प्रशस्तीनां च विविधानि उदाहरणानि, उपालम्भवचनानि, प्रणामाशीर्वाद-

१—एतद्विषये विशेषज्ञानाय होशियारपुरतः प्रकाशितायाः प्रशस्तिकाशिकाया भूमिकाअवलोकनीया।

वचसां वैविध्यमिति अनेके विषयः सविस्तरं निरूपिताः सन्ति। एतादृशेषु सम्प्रति उपलभ्यमानेषु पुस्तकेषु विद्यापतिठक्कुर–विरचिता लिखनावली, बड़ोदातः गायकवाड-ओरिएण्टलसिरीजद्वारा प्रकाशिता लेखपद्धतिः, होशियारपुरात् विवेश्वरानन्दशोधसंस्थानद्वारा प्रकाशिता बालकृष्णत्रिपाठिविरचिता प्रशस्तिकाशिका, बम्बईस्थ–भारतीयविद्याभवनतः सिंघीजैन–ग्रन्थमालायां प्रकाशितः विज्ञप्तिलेखसंग्रहश्चेति पुस्तकानि विशेषमहत्त्वपूर्णानि सन्ति। एतेषु व्यापार-भूमिक्रयविक्रय–शासन-परिवार–ऋण-अभियोग–प्रभृतिविषय-सम्बद्धानि बहूनि विविधप्रकारकाणि च पत्राणि विद्यन्ते। एषु पत्रेषु कानिचित् पद्यमयानि सन्ति, कानिचित् गद्यमयानि सन्ति तथा कानिचित् च उभयविधानि अपि। एतेषु सारल्यदृष्ट्या, विविधतायाः दृष्ट्या, गद्यमयतया च लिखनावली लेखपद्धतिश्चेति पुस्तकद्वयं पत्रविषये विशेषरूपेण ज्ञानवर्द्धकं मार्गदर्शकं च स्वीकर्तुं शक्यते। अवशिष्टं पुस्तकद्वयं तु पद्यबहुलतया, दीर्घसमासनिबद्धतया च वैदुष्यदृष्ट्या अवश्यमेव वैशिष्ट्यं भजते परं व्यावहारिकदृष्ट्या न बहु उपकारकम्। अत्र पाठकानां ज्ञानाय मनोरंजनाय च पूर्वोक्तपुस्तकद्वयात् कानिचित् उदाहरणानि दीयन्ते—

## १—पितरं प्रति पुत्रस्य पत्रम्

स्वस्ति। परमाराध्येषु निरुपाधिस्नेहसम्पादित-पोषण-बर्द्धन-नयविनय-शिक्षा-प्रबोध-प्रभुषु श्रीमत्तातचरणेषु अमुकग्रामात् श्री अमुकस्याऽष्टाङ्ग-प्रणतिपत्रीयम्। श्रीमच्चरणानां शुभाशंसनानुभावेन कुशलमत्रेति सौमनस्यं विधातव्यम्। स्वीय-कुशलोदन्तेन मच्चेतसि च परमानन्दः समर्पणीयः। प्रयोजनञ्च श्रीमच्चरणानामाज्ञां शिरसि निधाय यदर्थमहमागतोऽस्मि तत्कार्य्यं सम्पन्नकल्पम्। द्वित्राणि दिनान्यत्र स्थित्या कार्यंन्निर्वाह्य तत्राहमागतप्रायोऽस्मि। ततो मन्निमित्ता चिन्ता न कर्तव्या। किम्बहुनेति।

लिखनावली



## २—गुरुं प्रति शिष्यस्य पत्रम्

स्वस्ति । परमाराध्येषु पैशुन्य–परित्याग–पवित्रेषु, प्राण–धारण–कारण-स्वीकृताष्टग्रास–शकलेषु, श्रीमन्महेश्वरध्यानपरायण–मानसेषु; जटाभस्म-कपालाभिसन्द्योतितपाशुपताश्रमपरिग्रहचिन्हेषु, परमतपश्शील–परम–माहेश्वर—तत्त्वज्ञानसम्पन्न—गुरुवर–श्रीअमुकचरणेषु अमुक ग्रामात् मिश्र-श्री अमुकानामष्टाङ्गप्रणतिपत्रीयम् । शिवधर्मादि—सकलतपश्चरणपरायणाः श्रीमन्तः सर्वदा काश्यां तिष्ठन्ति यदा चाहन्तेन पथा समायातस्तदा श्रीमच्चरणैः करुणावरुणालयैर्म्मंय्याशिषो दत्ताः तत्फलमिदानीमहं धनवान् पुत्रवान् आयुष्मानस्मीति निवेदितं भिक्षासामग्री च श्रीमच्चरणान्तेवासि–श्री करुणाकरब्राह्मणद्वारा कियत्यपि प्रहितास्ति । सानुग्रहेण परिग्रहणीया । किम्बहुनेति ।

लिखनावली

## ३—रुष्टभार्यायाः भर्तारं प्रति पत्रम्

स्वस्ति । अमुक स्थाने भर्तृ अमुकपादान् अमुकस्थानात् अमुका सादरं वार्तयति यथा । कार्यं च । सर्वमानुषाणां कुशलमस्ति । तत्रत्यात्मकुशलवार्ता प्रहेया । अन्यच्च । यतस्त्वं गतस्ततस्तव पाश्चात्यगृहदारापत्यादिकं सममपि विस्मृतम् । तव यत्रैव चट्टनं तत्रैव पत्तनम् । त्वया गच्छता यच्छंबलं मुक्तं तच्चार्धमासं यावत् तव गृहे निर्यातम् । ग्रहणकानि अड्डाणकानि मुक्त्वा उद्धार ( प्रो ) द्धारादिना दिनानि निर्गमितानि । साम्प्रतमपत्यैः सहं

महत्कष्टं वर्तते । यदि भर्तृत्वमनवरतं महिलायाः कस्याश्चिद्विद्यते ततोऽत्रागन्तुं न शक्नोषि । बालकस्य व्यापादनेन गोहत्या पापं भवति, कुटुम्बकस्यापि सारां कर्त्तुं युज्यते; इति परिभाव्य निष्ठुरहृदया सा यदि मुत्कलयति तदा साराकरणायागन्तव्यं, नो वा शम्बलं प्रहेयम् । यद्येतच्छीघ्रं न करिष्यसि तदाहं त्वदीयं गृहादिकं परित्यज्यापत्यान्यादाय पितृगृहं यास्यामि । इति मत्वा यत्तव सुखावहं स्यात्तदनुष्ठेयमिति ।

लेखपद्धतिः

## ४—मित्रं प्रति मित्रस्य पत्रम्

स्वस्ति । यथास्थाने विद्वत्त्वदाक्षिण्यौदार्यादि—वरगुणगणालंकृतशरीरं परमप्रेमवत्सलं वयस्य ममुकममुक बाहुभ्यां गाढमालिङ्ग्य कुशलं वार्तयति यथा । कार्यं च । कुशलमिहावगम्य तत्रत्यस्वीयकुशलवार्ताऽस्माकं धृतयेऽनवरतं प्रहेया । अन्यच्च । यद्दिनपूर्वं त्वया सह मम वियोगः समजनि तद्दिनपूर्वं भवत्स्मरणकावृत्तमनसो मे न बुभुक्षा न पिपासा न निद्रादीनि च सुखानि वर्तन्ते । त्वया सह क्रीडित-दिवसानि स्मृत्वा सखेदं मनः सम्पद्यते इति मत्वा लेखदर्शनादेव यदि चित्ते धारयसि तदा शीघ्रं प्राघूर्णकेन समागन्तव्यम् ।

लेखपद्धतिः

विस्तारभयात् अधिकानि उद्धरणानि न दीयन्ते । परन्तु येषां पाठकानां प्राचीन–पत्रसाहित्यविषये अधिकं ज्ञातुं समीहा स्यात् तैः इमानि पुस्तकानि अवश्यं द्रष्टव्यानि इति मे विनम्रनिवेदनम् ।

परन्तु सम्प्रति न खलु इमानि पुस्तकानि सुलभानि न वा सामयिक-दृष्ट्या उपयोगीनि । अतः पत्रविषये नूतनपुस्तकानां लेखनस्य आवश्यकताम् अनुभूय इदं लघु पुस्तकं प्रकाशितं कार्यालयद्वारा । येषु विषयेषु, यया शैल्या, यादृश्यां भाषायां वा इमानि पत्राणि लिखितानि; तानि कियत् उपयोगीनि कियद् वा त्रुटिपूर्णानि इति पाठकाः स्वयमेव ज्ञास्यन्ति । अस्मिन् विषये यदि कैश्चित् पाठकैः कश्चन परामर्शः प्रदीयते तर्हि अहं तेषां लेतरां कृतज्ञो भविष्यामि ।

अस्य पुस्तकस्य कानिचित् पत्राणि मदतिरिक्तं मम सहयोगिना श्री रामसागर द्विवेदिना तथा श्री धर्मदत्त चतुर्वेदिना च लिखितानीति तौ मम नितरां धन्यवादार्हौ ।

एतत्पुस्तकस्य प्रकाशनेन यदि संस्कृतसमाजे संस्कृते पत्राणि लेखितुं प्रेरणा उद्भवति मार्गदर्शनं च लभ्यते तर्हि अहं परिश्रमं सफलं मन्स्ये ।

२५–६–१६८४ निवेदकः

वाराणसी वासुदेव द्विवेदी शास्त्री

# विषय-सूची

# पत्र-मञ्जूषा

## पौत्रं प्रति पितामहस्य पत्रम्

झाटपारतः

१२-६-८४

परमप्रिय देवदत्त !

कोटिशः शुभाशीर्वादाः

अहं भगवतः कृपया सकुशलः अस्मि, तव आरोग्यस्य मंगलमयजीवनस्य च शुभकामनां करोमि । अद्य तव परीक्षाफलं 'जनवार्ता' समाचारपत्रे प्रकाशितं जातम् । त्वया प्रथमायां श्रेण्याम् उत्तीर्णता लब्धा इति विज्ञाय न केवलं वयं परिवारस्य जनाः एव, अपितु ग्रामस्य अन्ये जनाः अपि प्रसन्नचेतसः दृश्यन्ते । सर्वे तुभ्यं धन्यवादान् ददते तव उन्नतिं च कामयन्ते ।

वत्स, प्राथम्यं प्राप्य आत्मनः योग्यतां च प्रदर्श्य त्वया महती प्रसिद्धिः तु प्राप्ता एव सहैव अस्माकम् अपि शिरः समाजे उन्नतं संजातम् । अस्माकं गृहे एतादृशः सुशीलः मेधासम्पन्नश्च न कोऽपि बालकः जातः । त्वया तस्य पूर्तिः कृता इति त्वं सर्वथा धन्यवादार्हः असि ।

अतएव त्वादृशं पौत्रं प्राप्य अहम् आत्मानं धन्यं स्वजीवनं च सफलं मन्ये । आशासे यत् त्वं सम्पूर्णे छात्रजीवने निरन्तरं प्राथम्यं प्राप्नुवन् छात्राणां कृते एकं आदर्शं प्रस्तुतं करिष्यसि ।

इति सस्नेहं

तव पितामहः

विश्वनाथपाण्डेयः

# पौत्रं प्रति पितामहस्य पत्रम्

कमालपुरतः
८-७-८४

चिरंजीविन् जयशंकर !

सस्नेहशुभाशिषः

अद्यैव तव पत्रम् अधिगतम् । त्वया स्वकीयकक्षायां प्रथमं स्थानं लब्धम् इति पठित्वा अहं नितरां प्रसन्नोऽस्मि । तत्रापि संस्कृतविषये त्वं विशिष्टाङ्कान् लब्धवान् असि इति महतो हर्षस्य विषयः वर्तते । परन्तु अध्ययने त्वं यथा ध्यानं ददासि तथा स्वास्थ्यरक्षणे त्वया ध्यानं न दीयते । अस्मिन् विषये अस्माकं महती चिन्ता वर्तते । तव पितामही तु अहोरात्रं चिन्ताकुलचेताः तिष्ठति । विंशत्याः दिनेभ्यः पूर्वं त्वन्मित्रस्य राकेशस्य पत्रम् आगतम् आसीत् । सः लिखितवान्—"जयशंकरः बहु अध्ययनं करोति परं भोजने शयने व्यायामे च अस्य तु रुचिः एव न दृश्यते । रात्रौ विलम्बेन शेते पुनश्च चतुर्वादने एव अध्ययनार्थं जागर्ति । अनेन अस्य स्वास्थ्यं निरन्तरं क्षीयमाणं जायते" इति ।

वत्स ! त्वया एवं न कर्तव्यम् । शरीरम् एव सर्वेषां भौतिककर्मणाम् आध्यात्मिककर्मणाञ्च आधारः अस्ति । स्वस्थं शरीरं विना किमपि साधयितुं न शक्यते ।

अतएव त्वया नियमितरूपेण भोजनं पानं शयनं जागरणं च करणीयम् । प्रातः किञ्चिद् व्यायामोऽपि विधेयः । एवं कृते तव स्वास्थ्यं शोभनं, शरीरं सुन्दरं तथा मनः प्रसन्नं स्थास्यति । आशासे त्वं मम वचनानि स्वीकरिष्यसि तदनुसारं च आचरणं विधास्यसि ।

सर्वविधमङ्गलाकांक्षी
तव पितामहः
कमलेशपाण्डेयः

# पितामहं प्रति पौत्रस्य पत्रम्

राचीतः

जन्माष्टमी २०४० वि०

परमपूज्याः श्री बाबाजी महोदयाः

श्रीमच्चरणकमलेषु सविनयं प्रणतिराशयः

भवतां कृपापत्रं गतदिने मया प्राप्तम्। पत्रं लब्ध्वा पठित्वा च महान् प्रमोदो जातः। अत्र भवत्कृपया अहं सर्वथा कुशली सानन्दश्च अस्मि। अध्ययनम् अपि मम सम्यक् प्रकारेण प्रचलति। मम गुरुजनानाम् अपि कृपादृष्टिः मयि सर्वदा विलसति।

अहं प्रथमश्रेण्याम् उत्तीर्णः इति समाचारं ज्ञात्वा भवता महती प्रसन्नता प्रकटीकृता पत्रे। परन्तु, इदं भवच्चरणकमलयोः एव कृपायाः फलं वर्तते। भवताम् अनुग्रहेण शुभाशीर्वचनैश्च अहं पुनरपि अग्रिमासु परीक्षासु प्रथमश्रेणीं प्राप्स्यामि सर्वत्र च सफलः भविष्यामि इति मे द्रढीयान् विश्वासः अस्ति।

मम स्वास्थ्यविषये या भवद्भिः चिन्ता प्रकटीकृता सा यथार्था एव अस्ति। परन्तु भवतां निर्देशानुसारं सम्प्रति अहं स्वास्थ्यविषये अपि ध्यानं दास्यामि तथा स्वस्थरूपेण भवतां पुरस्तात् उपस्थितो भविष्यामि।

काले काले पत्रप्रदानेन, शुभाशीर्वादैः, मार्गदर्शनेन, मम दोषाणां निरूपणेन च अहं सर्वदा अनुग्राह्यः इति पुनः पुनः प्रणतिपूर्वकम्—

भवदनुकम्पालितः पौत्रः

राकेशः

# पितरं प्रति पुत्रस्य पत्रम्

वाराणसीतः

२२-४-८४

प्रातःस्मरणीयाः पितृचरणाः !

कोटिशः प्रणामाञ्जलयः

भवत्कृपया अहम् अत्र कुशली वर्ते, आशासे च भवन्तोऽपि कुशलिनः स्युः। सूचनीयम् इदं वर्तते यत् मईमासस्य विंशतारिकातः मम ग्रीष्मावकाशः भविता। पुनः जुलाईमासे अष्टमतारिकायां विद्यालयः उद्घटिष्यते। यद्यपि अवकाश-काले सर्वेषामपि छात्राणां गृहं गन्तुं समीहा भवति किन्तु मया विचार्यते यत् ग्रीष्मावकाशे अत्रैव स्थित्वा अध्ययनं करवाणि। यतो हि आगामिन्याः कक्षायाः पाठ्यक्रमः अतीव कठिनो वर्तते। किन्तु अत्र एका महती बाधा इयं वर्तते यत् वाराणस्यां सम्प्रति असहनीया उष्णता वर्तते। अनेन संकटेन अत्राहं स्थातुं न शक्नोमि। अतः गृहे एव सम्पूर्णस्य ग्रीष्मावकाशस्य प्रत्येकं क्षणम् अध्ययने यापयिष्यामि इति निश्चितं मया।

अतएव अहम् इतः एकविंशतारिकायां प्रस्थास्यामि द्वाविंशतारिकायां च गृहं प्राप्स्यामि। सूचनार्थं पत्रमिदं प्रेषयामि।

भवत्स्नेहपालितः पुत्रः

श्रीनिवासो द्विवेदी

# पितरं प्रति पुत्रस्य पत्रम्

वाराणसीतः

७.७.८४

परमादरणीयेषु पितृचरणकमलेषु !

प्रणामपूर्वकं निवेदनम्

भवताम् आशीर्वादेन अहम् अत्र सानन्दोऽस्मि, भवतां कुशलाय च ईश्वरं प्रार्थये। मम अध्ययनं शोभनतया भवति। षड्मासिकी परीक्षा समाप्ता जाता। अस्यां परीक्षायां मया शोभनाः अङ्काः प्राप्ताः, एतेन आशास्यते यत् वार्षिक्यां परीक्षायाम् अपि उत्तमाः अङ्काः लप्स्यन्ते।

अग्रे निवेदनीयम् इदम् अस्ति यत् मया कानिचित् आवश्यकानि पुस्तकानि क्रेतव्यानि सन्ति। तेषां क्रयणस्य कृते सार्धशतं रूप्यकाणि अपेक्ष्यन्ते। अत एव शीघ्रमेव द्रव्यं प्रेष्यतां येन पुस्तकं क्रीत्वा अहं स्वकीये अध्ययने संलग्नो भवानि। अत्र अन्यत् सर्वं कुशलं वर्तते, गृहस्य सर्वः समाचारः लेखनीयो भवद्भिः।

भवतां प्रियपुत्रः

सिद्धेशभट्टाचार्यः

# पुत्रं प्रति पितुः पत्रम्

कालिकातः
२-६-८४

आयुष्मन् आलोक !

विलसन्तुतराम् आशिषः

सकुशलोऽस्मि आशासे त्वमपि कुशली स्याः। तव पत्रं प्राप्तं पठित्वा च मया ज्ञातं यत् त्वं संस्कृते उत्तमाङ्कान् लब्धवान् असि किन्तु आंग्ल-भाषायां, इतिहासे गणिते च समीचीनाङ्कान् न प्राप्तवान् असि। मन्ये त्वया एतेषां विषयाणाम् उपेक्षा क्रियते।

परन्तु एतत् कथमपि शोभनं नास्ति। सम्प्रति समाजे एतेषां विषयाणां ज्ञानस्य महती उपयोगिता वर्तते। संस्कृतस्य महान् विद्वान् भूत्वा अपि कोऽपि समाजस्य राष्ट्रस्य च तादृशम् उपकारं कर्तुं न शक्नोति यादृशं उपकारं आधुनिकविषयविदः अन्ये जनाः कर्तुं शक्नुवन्ति। अपि च समाजे तस्यैव विशेषरूपेण आदरः सम्मानश्च क्रियते यः संस्कृतेन सह आधुनिक-विषयाणां अपि ज्ञाता अस्ति। आंग्लभाषाज्ञातृभिः सह यदा कोऽपि संस्कृतज्ञः आंग्लभाषायां वार्तालापं करोति तदा तस्य बहु सम्मानः भवति। अपि च अद्यतने युगे सामान्यज्ञानस्य (General Knowledge) महती आवश्यकता वर्तते। सामान्यज्ञानं विना मनुष्यः कूपमण्डूकसदृशः मन्यते। अतएव आंग्लभाषेतिहासगणितादीनाम् च अध्ययनमपि परमावश्यकम्।

अतएव समाजस्य उन्नत्यै, राष्ट्रस्य उत्थानाय आत्मनः विकासाय च त्वया संस्कृतेन सह आधुनिकविषयाणां गंभीरतया अध्ययनं करणीयम्। अन्यत् सर्वं कुशलम्।

तव पिता
प्रेमदत्तचतुर्वेदी

# मातरं प्रति पुत्रस्य पत्रम्

वाराणसीतः
१-२-८४

परमाराध्येषु मातृचरणेषु
शोभन्तां कोटिशः प्रणतिराशयः

अहं कुशली तिष्ठन् भवत्याः कुशलमङ्गलार्थं वाराणसीपतिं शिवं प्रार्थये। अतीव दुःखस्य एका वार्ता निवेदनीया वर्तते—राजकीयक्वीन्स-माध्यमिकविद्यालयवाराणसीतः मम स्थानान्तरणं राजकीयइण्टरकालेज नैनीतालस्य कृते जातम्।

वाराणस्यां तु अध्यापनात् अतिरिक्ताः अन्ये अपि बहवः लाभाः सन्ति। अत्र बहवः विद्वांसः निवसन्ति। तैः सह सम्पर्कः साक्षात्कारश्च प्रथमः लाभोऽस्ति। पुनः प्रतिदिनं गंगास्नानस्य अपि महान् लाभः भवति। एवमेव विश्वनाथ-दर्शनम् अपि प्रायः प्रतिदिनं जायते। एतत्सर्वं नैनीताले तु सुदुर्लभम् एव।

परं तत्र स्वास्थ्यदृष्टया एकः महान् लाभो विद्यते। तत्रत्यं वातावरणं अति स्वास्थ्यदायकं आनन्दकरं च भवति। तत्रत्यः शीतलः सुगन्धिः च वायुः स्वास्थ्यकरः भवति। तत्रत्यानि पर्वतीयानि दृश्यानि अतीव मनोहराणि भवन्ति। ग्रीष्मकाले तु तत्र साक्षात् स्वर्गमेव अवतरति। अत्र मम स्वास्थ्यं प्रायेण शोभनं न तिष्ठति, वर्षद्वयात् तु श्वासरोगः मां बहु बाधते। मन्ये, तत्र गमनेन मम स्वास्थ्यं शोभनतरं भविष्यति।

तत्राहं पञ्चविंशतितम्यां तारिकायां स्थानं ग्रहीतुं प्राप्तो भविष्यामि। नैनीतालं गत्वा पुनः पत्रं प्रेषयिष्यामि; तत्रत्यं वृत्तं च सूचयिष्यामि।

तव पुत्रः
अवधेशसिंहः

# मातरं प्रति पुत्रस्य पत्रम्

लक्ष्मणपुरतः

४-४-८४

परमपूज्येषु मातृचरणेषु

शतशः प्रणतिरक्षयः

अहमत्र कुशली, भवत्याः कुशलाय भगवन्तं शिवं प्रार्थये । महता खेदेन सह मया लिख्यते यत् अस्मिन् वर्षे अहं सम्पूर्णां परीक्षां दातुं न अशक्नवम् । परीक्षाकाले एव मम स्वास्थ्यम् अशोभनं जातम् । द्वितीयस्य प्रश्नपत्रस्य परीक्षां दत्त्वा यदा अहं छात्रावासम् आगतवान् तदा मम शिरसि महती वेदना अजायत । रात्रौ ज्वरः अपि जातः । ज्वरेण अहं पञ्चदिनानि यावत् आक्रान्तः अतिष्ठम् । इदानीं स्वस्थोऽस्मि चिन्ता न करणीया ।

अस्मिन् वर्षे परिश्रमपूर्वकं मया अध्ययनं कृतमासीत् । यदि मम स्वास्थ्यम् अशोभनं न अभविष्यत् तर्हि मया प्रथमश्रेणी अवश्यमेव लब्धा स्यात् । परं परवशे वस्तुनि किं कर्तुं शक्यते आशासे, कदाचित् अग्रिमे वर्षे भगवत्कृपया ईदृशी दयनीया स्थितिः न स्यात् ।

भवदीयः प्रियपुत्रः

कामेश्वरशुक्लः

# मातरं प्रति पुत्र्स्य पत्रम्

प्रयागतः
५-५-८४.

परमश्रद्धेयासु मातमहाभागासु

विनयपूर्वकं चरणस्पर्शः

अहं तवाशिषा सकुशला अस्मि, भवतीनां कुशलम् आरोग्यं च आकांक्षे। तव स्नेहसिक्तं पत्रं प्राप्तं, पठित्वा च त्वत्समाचारः ज्ञातः। मातः, तव-प्रसन्नतायाः अयं विषयो वर्तते यत् एकादशकक्षायाः त्रैमासिक्यां परीक्षायाम् अहं प्रथमं स्थानं लब्धवती अस्मि। संस्कृतविषये इतिहासविषये च मया विशेषयोग्यता ( Distinction ) प्राप्ता।

गृहात् अध्ययनं कर्तुं वाराणसीं आगतायाः मम त्रयः मासाः व्यतीताः। अस्मिन् अवधौ गृहात् आनीतं सर्वं घृतं समाप्तं जातम्। अत्र आपणे यत् सर्षपतैलं प्राप्यते ( विक्रीयते ) तत् अन्यपदार्थमिश्रणात् शुद्धं लाभकरं च न भवति। अत एव कदापि अहं तत् तैलं न क्रीणामि। गृहादेव यत् आनीतम् आसीत् तदेव अद्यावधि प्रयुक्तम्। किन्तु इदानीं तदपि समाप्ति गतं वर्तते।

अतएव शीघ्रमेव लघुभ्रात्रा राजीवेन घृतं तैलं च प्रेष्येताम्। आवश्यकतानुसारं पुनरपि-अपरं पत्रं प्रेषयिष्यामि वृत्तं च लेखिष्यामि।

भवदीया प्रिया दुहिता
रंजना गुप्ता

# भ्रातृव्यं प्रति पितृव्यस्य पत्रम्

कानपुरत:
१-५-८४

प्रिय जितेन्द्र !

चिरञ्जीवो भव

कुशलपूर्वकं तिष्ठन्नहं तव कुशलाय भगवन्तं भवानीपतिं शिवं प्रार्थये। त्वम् एक: अतीव मेधासम्पन्न: योग्यश्च छात्रोऽसि। त्वया बाल्यकालादेव प्रथमा श्रेणी प्रत्येकं कक्षायां लब्धा। अत एव अहं त्वयि बहु आशान्वित: अस्मि। सर्वेषामपि जनानां स्वजीवनस्य किमपि नियतम् उद्देश्यं भवति। निश्चितम् उद्देश्यं विना कोऽपि स्वीये जीवने साफल्यं न अवाप्नोति। अत-एव प्रायेण सर्वै: एव छात्रै: छात्रजीवने एव उद्देश्यनिर्धारणं क्रियते। तेषु कश्चन अभियन्ता भवितुम् इच्छति, कश्चित् चिकित्सक: भवितुं वाञ्छति; कोऽपि पत्रकार: भवितुं समीहते, कस्यचित सर्वकारीय: अधिकारी भवितुं समीहा भवति, कस्यचित् नेता भूत्वा राष्ट्रसेवां कर्तुं कामना भवति, केनापि शिक्षा-क्षेत्रे एव सेवा विधातुं इष्यते केनचित् च स्वतन्त्ररूपेण लेखनादिकं कुर्वता जीवनयापनस्य उद्देश्यं निर्धार्यते।

अत्राहं ज्ञातुमिच्छामि यत् त्वया जीवनस्य किम् उद्देश्यं निश्चितं कृतं वर्तते। अध्ययनसमाप्त्यनन्तरं किं कर्तुं तव योजना वर्तते। एतत् सर्वं विलिख्य प्रेष्यताम्। अत्रत्या: सर्वे जना: तव अभ्युन्नतिं कामयन्ते शुभा-शिषश्च सूचयन्ति।

तव पितृव्य:
विद्याधरो द्विवेद:

# पितृव्यं प्रति भ्रातृव्यस्य पत्रम्

आगरातः
२४-६-८४

परमाराध्येषु पितृव्यचरणेषु
विलसन्तु प्रणतिराशयः

भवदीयं स्नेहसिक्तं पत्रं लब्धम्, एतच्च पठित्वा अहं नितरां प्रसन्नताम् अनुभवामि।

स्वकीये पत्रे भवन्तः मां पृष्टवन्तः सन्ति, "त्वया जीवनस्य किम् उद्देश्यं निश्चितं कृतं वर्तते ? अध्ययनसमाप्त्यनन्तरं किं कर्तुं तव योजना वर्तते ? इति"

तर्हि अस्मिन् पक्षे मम यः विचारः अस्ति तम् अहम् अत्र उपस्थापयामि। मम छात्रावासे ये मित्राणि सन्ति तेषु कश्चन अध्यापकः भवितुम् इच्छति, कश्चित् चिकित्सकः, कोऽपि चित्रकारः भवितुं वाञ्छति केनचित् च नेत्रा भूत्वा समाजसेवां कर्तुं काम्यते।

मया तु इष्यते यत् प्रशासनिकसेवायां संलग्नेन भूत्वा देशस्य महती सेवा महान् उपकारश्च क्रियेत। यदाऽहं हाईस्कूलकक्षायाम् आसम् तदानीमेव मम हृदये अयं विचारः समायातः यत् "अवसरे प्राप्ते अहं 'जिलाधिकारी' पदं प्राप्य निष्पक्षभावेन जनतायाः सेवां करिष्यामि इति"।

अस्य कृते आई० ए० एस० ( I. A. S. ) प्रतियोगितायाम् उत्तीर्णता प्राप्तव्या भवति। अतएव आगामिनि वर्षे अहम् आई० ए० एस० प्रतियोगितायां भागं ग्रहीष्यामि। अस्यां दिशि अहं भवतां मार्गदर्शनं अपेक्षे यतः भवद्भिः पी० सी० एस० इति प्रशासकीया परीक्षा उत्तीर्णा वर्तते। अतः भवन्तः स्वीयेन अनुभवेन मम मार्गदर्शनं साहाय्यं च कुर्वन्तु इति मम प्रार्थना।

भवतां
जितेन्द्रद्विवेदी

# भ्रातृव्यं प्रति पितृव्यस्य पत्रम्

देवरियातः

६-६-८४

आयुष्मन् !

दीर्घजीवीभव

मम कुशलं वर्तते, तव कुशलं च कामये ! त्वया स्नातकोत्तरपरीक्षा प्रथमश्रेण्याम् उत्तीर्णा। तव एतादृशं साफल्यं विज्ञाय अहं महतीं प्रसन्नताम् अनुभवामि।

अग्रे, शोधकार्यस्य कृते विषयचयनसम्बन्धे त्वया अहं पृष्टः अस्मि। यथा त्वया पत्रे संकेतितं, तव समक्षं "रघुवंशस्य व्याकरणात्मकमध्ययनम्" "धात्वर्थविमर्शः" इति द्वौ विषयौ स्तः। तत्र प्रथमः विषयः तु अतीव सरलो वर्तते। द्वितीये धात्वर्थविमर्शः इति विषये काठिन्यं, श्रमसाध्यता विपुलज्ञान-स्यापेक्षा च वर्तते। अतएव इमं विषयम् आश्रित्य यदा त्वया शोधकार्यं सम्पादयिष्यते तदा तव ज्ञानं वर्द्धिष्यते, संस्कृतक्षेत्रे एकं महत् कार्यमपि सम्पत्स्यते। एतद्विषयमवलम्ब्य शोधकार्ये कृते सति त्वया महत् यशोऽपि लप्स्यते।

अतिपरिश्रमेण निष्ठापूर्वकं च त्वया वर्षत्रयं तपः आचरणीयं येन तव शोधकार्यं सम्पन्नतां गच्छेत्। कथं त्वया पत्रोत्तरदाने शैथिल्य विधीयते ? पत्रोत्तरप्रदाने एतावान् विलम्बः न विधेयः।

तव पितृव्यः

ज्ञानचन्द्रचतुर्वेदी

# कनिष्ठभ्रातरं प्रति ज्येष्ठभ्रातुः पत्रम्

कानपुरतः
३.६.८४

चिरञ्जीविन् अतुल !

शुभाशीर्वादाः

प्राप्तं तव स्नेहसिक्तं पत्रं तत्पठित्वा सर्वः समाचारः ज्ञातः। वत्स, अद्याहं तव हिताय एकां महत्त्वपूर्णां वार्तां लिखामि।

इदं खलु आर्थिकयुगं वर्तते। अहं पश्यामि यत् त्वं सदा अध्ययने एव लीनः तिष्ठसि। आत्मनः नियुक्तिविषये इदानीं त्वं किञ्चिदपि न चिन्तयसि। त्वया किमपि समाचारपत्रादिकं न पठ्यते। सर्वकारीयसेवा-सम्बद्धानि विज्ञापनानि नावलोक्यन्ते। एतत् कथमपि समीचीनं नास्ति। त्वया भिन्न-भिन्नसमाचारपत्रेषु विज्ञापनं द्रष्टव्यम्। तत्तत्स्थानेषु आवेदनपत्राणि प्रेषणीयानि।

एवं कृते सति त्वं कुत्रचित् नियुक्तो भविष्यसि। अनेन तव धनोपार्जनस्य अपि एक मार्गः प्रशस्तो भविष्यति तथा त्वया कृतम् अध्ययनम् अपि सार्थकं भविष्यति।

आशासेऽहं यत् त्वया मम कथनानुसारं आचरिष्यते। अत्र सर्वं कुशलं वर्तते, तत्रत्या कुशलता लेखनीया।

त्वदीयः मङ्गलाकांक्षी भ्राता
जनार्दनद्विवेदी

## ज्येष्ठभ्रातरं प्रति कनिष्ठभ्रातुः पत्रम्

वाराणसीतः
२१-३-८४

पूज्येषु भ्रातृपादेषु

शतशः प्रणतिराशयः

भवदीयं प्रेरणादायकं पत्रम् अधिगतम्। एतत् पठित्वा मया बहुप्रेरणा प्राप्ता। समाचारपत्रेषु विज्ञापनानि द्रष्टुं तदनुसारं च आवेदनं कर्तुं अहं भवता आदिष्टोऽस्मि।

भवदाज्ञानुसारं मया गते मासे एकस्मिन् संस्थाने आवेदनपत्रं प्रस्तुतं कृतमासीत्। भगवतः कृपया अहं तत्र साक्षात्कारस्य कृते आहूतः तथा साक्षात्कारे साफल्यं अपि लब्धवान्।

अद्यैव पोस्टद्वारा प्रेषितं नियुक्तिपत्रं मया प्राप्तम्। एतद् नियुक्तिपत्रं दृष्ट्वा मनः अतीव हर्षोत्फुल्लम् अभवत्। सर्वप्रथमं भवन्तं एव सूचयितुं धन्यवादान् च दातुं अहम् ऐच्छम् अतः भवत्कृते पत्रं लिखामि।

एतत्सर्वं भवताम् एव प्रेरणायाः फलं वर्तते। यदि भवता प्रेरणा दत्ता न स्यात् तर्हि मया तु कमथपि आवेदनपत्रं प्रस्तुतं न कृतम् अभविष्यत् तथा एतादृशं महत् साफल्यं प्राप्तं न अभविष्यत्। भवादृशं भ्रातरं प्राप्य अहम् आत्मानं गौरवान्वितं मन्ये। अन्यत् सर्वं गृहवृत्तं शोभनं वर्तते।

भवदीयः स्नेहाकांक्षी
नारायणदत्तशर्मा

# ज्येष्ठभ्रातरं प्रति कनिष्ठभ्रातुः पत्रम्

प्रयागतः
५-४-८४

सम्माननीयेषु भ्रातृमहोदयेषु !

सादरप्रणतिपूर्वकं निवेदनम् !

बहूनि दिनानि व्यतीतानि परं भवताम् एकमपि पत्रं नाधिगतम्। मन्ये, भवन्तः ममोपरि अप्रसन्नाः कुपिताश्च संजाताः वर्तन्ते। अस्य कारणम् अपि मया ज्ञायते। अस्मिन् वर्षे अष्टमकक्षायाम् अहम् अनुत्तीर्णः अभवम् यतोहि मया किञ्चिदपि अध्ययनं न कृतम्। भवद्भिः भूयो भूयः कथ्यमानेन अपि मया अध्ययने ध्यानं न दत्तम्। मां सन्मार्गे आनेतुं भवद्भिः अत्यधिकः प्रयासः कृतः किन्तु मया सदैव उद्दण्डताम् अशिष्टतां च प्रदर्शयता भवदाज्ञायाः उल्लंघनम् एव कृतम्।

एतस्य सर्वस्य दुर्वृत्तस्य कृते अहम् अति दुःखितः आसम् नितरां लज्जां च अनुभवामि स्म। सौभाग्यस्य अयं विषयो वर्तते यत् अद्यैव मम हृदये अकस्मात् परिवर्तनं जातम्। अहं प्रतिज्ञां करोमि यत् अद्यप्रभृति परिश्रमेण अध्ययनं करिष्यामि कदापि उद्दण्डताम् अशिष्टतां च न विधास्यामि। पदे पदे अहं भवतां आज्ञायाः पालनं कर्तुं तत्परः स्थास्यामि॥ मम सर्वाः त्रुटयः भवद्भिः क्षम्यन्ताम्।

इदं पत्रं लब्ध्वा कृपया त्वरितमेव पत्रं प्रेष्यताम् येन अहं जानानि यत् भवन्तः ममोपरि प्रसन्नाः जाताः। अत्र सर्वे कुशलिनः सन्ति भवतां कुशलं च कामयन्ते।

स्नेहाकांक्षी भवतां अनुजः

अशोकत्रिपाठी

## ज्येष्ठभ्रातरं प्रति कनिष्ठभ्रातुः पत्रम्

वाराणसीतः
२८-५-८४

सम्मानार्हाः भ्रातृवर्याः

विलसन्तु प्रणामाः

अहं सकुशलः अस्मि भवत्कुशलं च कामये। अस्यैव मासस्य विंशतारिकायां मम परीक्षा समाप्ता जाता। परीक्षानन्तरं गृहम् आगन्तुं समीहा आसीत् किन्तु एकं विशिष्टं कार्यम् उद्दिश्य अत्रैव स्थास्यामि।

वाराणस्यां "सार्वभौम-संस्कृत-प्रचार-कार्यालय" नाम्नी एका संस्था वर्तते। अत्र शास्त्री-आचार्य-बी० ए०-एम० ए० कक्षीयानां छात्राणां कृते एका प्रशिक्षण-कक्षा जूनमासे प्रचालयिष्यते। तस्यां कक्षायां भाषणानुवादलेखनादिविषयाणां शिक्षणं दास्यते। तत्र भागग्रहणेन मम बहु लाभः भविष्यति। गते वर्षे अपि एकं मासं यावत् मया अस्यां संस्थायाम् अध्ययनं कृतमासीत्।

मम मित्राणि अपि अस्यां प्रशिक्षण-कक्षायां भागं ग्रहीष्यन्ति। सुदूरस्थानेभ्योऽपि छात्राः अध्यापकाश्च अध्ययनार्थम् आगमिष्यन्ति।

अहम् आशासे यत् मासपर्यन्तम् अत्र अध्ययनं कृत्वा अहं संस्कृते वक्तुं भाषणं दातुं लेखं लेखितुं च क्षमो भविष्यामि। अतएव जूनमासे न आगत्य जुलाईमासे गृहम् आगमिष्यामि। भवन्तश्चिन्तिताः भविष्यन्तीति मत्वा सूचना इयं प्रेषिता।

भवदीयः आज्ञाकारी
हरिपतिसहायकौशिकः

# ज्येष्ठभ्रातरं प्रति कनिष्ठभ्रातुः पत्रम्

वाराणसीतः
१०-७-८४

मान्यवर्याः भ्रातृमहाभागाः

सादरं प्रणमामि

भवत्कृपयाऽहं कुशली, भवत्कुशलाय च परमात्मानं प्रार्थये प्रतिदिनम्। भवताम् आदेशानुसारं स्नातकोत्तरकक्षायां संस्कृत-विषयम् एव गृहीत्वा अध्ययनं करोमि। परन्तु इदमेकं महत् काठिन्यं वर्तते यत् पाठ्यक्रमे-निर्धारितानि सर्वाणि पुस्तकानि अत्र सारल्येन न लभ्यन्ते। तेषु कानिचित्तु मया क्रीतानि, कानिचित् च पुस्तकालयात् लब्धानि, अथ कानिचिच्च मित्रेभ्यः अपि प्राप्तानि। तथापि सर्वाणि पूर्णतां न गतानि। अवशिष्टानि पुस्तकानि आपणे न प्राप्यन्ते। पुस्तकालये अपि द्वित्राणि आसन् यानि अन्यैः छात्रैः गृहीतानि। अत एव तानि बिना अध्ययने काठिन्यम् अनुभूयते। चिन्तयामि यत् ग्रामे ये भवतां मित्राणि-विद्वांसश्च सन्ति तेषां निजे पुस्तकालये तानि भवितुं शक्नुवन्ति। तैः सह सम्पर्कं विधाय कृपया पुस्तकानि डाकद्वारा प्रेषयन्तु। तानि पुस्तकानि 'माधवीया धातुवृत्तिः' 'दशरूपकम्' 'ध्वन्यालोकः' इति सन्ति। शीघ्रमेव पुस्तकानि संप्रेष्य माम् अनुगृह्णन्तु भवन्तः।

आशासे लघवो मे भ्रातरः पठने दत्तचित्ताः भवेयुः।

भवतां कनिष्ठः भ्राता
वीरेन्द्रसिंहः

# ज्येष्ठभगिन्याः कनिष्ठभ्रातरं प्रति पत्रम्

काशी हिन्दू वि० वि०
वाराणसी
१८-३-८४

प्रिय ज्ञानेश !

भूयांसि शुभाशीर्वचनानि

अहं सकुशला अस्मि त्वदीयं च कुशलं कामये। आरम्भे यदाऽहम् अत्र आगतवती तदा मम मनः न लगति स्म। अध्ययने भोजने पाने च कस्मिश्चिदपि कार्ये मनः न रमते स्म। यतोहि छात्रावासे न काऽपि छात्रा मम परिचिता आसीत्। किन्तु शनैः शनैः आयाभिः छात्राभिः अध्यापिकाभिः च सह परिचयेन मनसि परिवर्तनं जातम्। इदानीं न कापि तादृशी बाधा विद्यते !

अहं महिला छात्रावासे निवसामि, मम प्रकोष्ठसंख्या पञ्चोत्तरषष्ठिः (६५) वर्तते। छात्रावासस्य एकस्मिन् कोणे मम प्रकोष्ठस्य स्थितिः। प्रकोष्ठस्य गवाक्षेभ्यः छात्रावासक्षेत्रे रोपितानां वृक्षलतापुष्पादीनां छटा स्पष्टरूपेण द्रष्टुं शक्यते।

भ्रातः ! कदाचित् त्वमपि वाराणसीम् आगच्छ। अत्र बहूनि दर्शनीयानि स्थलानि विद्यन्ते। यथा एकं प्रसिद्धं दर्शनीयं स्थानं 'सारनाथ' इति वर्तते यत्र भगवता बुद्धेन स्वशिष्येभ्यः उपदेशाः प्रदत्ताः। 'विश्वनाथमन्दिरं' 'संकटमोचनं' 'तुलसीमानसमन्दिरं' चेति इमानि अपि दर्शनीयानि स्थानानि सन्ति। गंगायाः तटे घट्टानां दृश्यं अतीव मनोहारि नयनाभिरामं भवति। सायंकाले तु गंगातटस्य शोभा अद्भुता भवति। सर्वविद्यानां राजधानी-स्वरूपस्य काशीहिन्दूविश्वविद्यालयस्य महिमा अवर्णनीयः अस्ति। अस्याः नगर्याः प्रतिस्थलं दर्शनयोग्यं विद्यते। परिवारस्य अन्येभ्यः ज्येष्ठवर्गेभ्यः सादरं प्रणामाः कनिष्ठवर्गेभ्यश्च सस्नेहं शुभाशिषः वाच्याः।

दर्शनोत्सुका तव ज्येष्ठाभगिनी
निर्मला

# भ्रातृजायां प्रति देवरस्य पत्रम्

वाराणसीतः
१.२.८४

श्रद्धेयासु भ्रातृजायासु
सादरं प्रणतिः

ईश्वरकृपया सर्वथा कुशली अहम् भवत्याः कुशलं अनामयं च कामये। स्वपितुः गृहात् भवत्याम् आगतायां मम गृहं सुरेन्द्रभवनेन सदृशं जातमासीद् किन्तु इदानीं भवत्या रहितं गृहं सर्वथा शून्यतां भजते।

अग्रे निवेदनीयम् इदमस्ति यत् मातुः स्वास्थ्यं सम्प्रति शोभनं न वर्तते। भवती अपि च इदं सम्यक् जानाति एव यत् सा प्रायेण रुग्णा तिष्ठति। भगिनी वासन्ती अपि पाक-कार्ये नैव निपुणा। येन-केन प्रकारेण सा भोजनं निर्माति। गृहस्य अन्यानि कार्याणि अपि तयैव करणीयानि भवन्ति। अतएव तस्याः उपरि बहुकार्यभारः वर्तते।

पुनश्च भवत्या तु ज्ञायते एव यत् मासद्वयानन्तरं मम जू० हा० स्कूल कक्षायाः परीक्षा भविष्यति। तत्र मया किञ्चिद् विशिष्टं स्थानं प्राप्तुम् इष्यते। एतत्तदैव सम्भवति यदा मम सर्वविधं सौविध्यं भवेत्। परं भवतीं विना किं नाम सौविध्यम्?

अतएव मातुः रुग्णतां, वासन्त्याः कष्टं ममाध्ययनवाधां च विचार्य भवत्या शीघ्रमेव अत्र आगन्तव्यम्। अहं भवतीम् आनेतुम् अष्टमः क्षारिकायां प्राप्स्यामि भवत्या पूर्वतः एव आगमनाय तत्परया भाव्यम्।

भवत्याः स्नेहाकांक्षी
रजनीशकुमारो द्विवेदः

# मातुलं प्रति भागिनेयस्य पत्रम्

पाटलिपुत्रतः

...६-५-८४

सम्माननीयाः मातुलचरणाः !

विलसन्तु कोटिशः प्रणामाः

कुशलपूर्वकम् अहं भवतां गृहात् स्वस्थानं प्राप्तवान्। भवद्गृहे अहं केवलं त्रीणि दिनानि स्थितवान् किन्तु एतावति एव अल्पीयसि काले भवद्भिः सर्वैः मह्यं यादृशः स्नेहः प्रदत्तः तस्य प्रभावः ममोपरि अतितरां संजातः। स्नेहमय्याः मातामह्याः मातुलान्याश्च प्रेम मां पुनः भवतां गृहम् आगन्तुं आकृष्टं करोति। भवताम् अनुशासनमयी स्नेहदानप्रणाली मह्यं बहु अरोचत। भवतां मार्गदर्शने संरक्षकत्वे च निवासस्य अवसरो यदि मया सदा लभ्येत तर्हि ममापि शयनजागरणयोः नियमनं स्यात् परिश्रमपूर्वकम् अध्ययनस्य क्षमता आगच्छेत् तथा अनुशासनपालनस्य अभ्यासोऽपि विकसितः स्यात्। अत्र अन्यत् सर्वं कुशलं वर्तते। मातामह्याः मातुलान्याश्च कुशलवृत्तं लेखनीयम्।

भवत्स्नेहभाजनं

विष्णुदत्तमिश्रः

# विद्यालये प्रवेशाय प्रार्थनापत्रम्

स्थानम्

दिनांकः

परमश्रद्धेयाः प्रधानाचार्यमहाभागाः,

विद्यालयः

मान्याः

अहम् अस्मिन् वर्षे"परीक्षाम् उत्तीर्णवान् अस्मि। भवतां विद्यालये मया प्रवेशः लब्धुम् इष्यते। श्रुतं मया यद् अस्य नगरस्य सर्वेषां विद्यालयानाम् अपेक्षया भवद्विद्यालये अध्यापनव्यवस्था अतीव समीचीना वर्तते। अध्यापकाः शिष्याः विनम्राः योग्याश्च सन्तः नियमितसमये समागत्य अध्यापनकार्यं प्रारभन्ते। एतद् ज्ञात्वा मम मनसि भवतां विद्यालये प्रवेष्टुं प्रबला समीहा वर्तते। प्रवेशाय गतपरीक्षायाः प्रमाणितेन लब्धाङ्कपत्रेण सह सुष्ठुतया प्रपूरितं प्रवेशावेदनपत्रं मया कार्यालये उपस्थाप्यमानं वर्तते। अनेन साकं भवत्सु सविनयं निवेदनं क्रियते यत् कृपया भवद्भिः स्वकीये विद्यालये मम प्रवेशः करणीयः। येन मया समुचिता योग्यता लब्धुं शक्येत।

आशास्यते मया यद् भवन्तः प्रवेशं विधाय मम महत्कल्याणं विधास्यन्ति।

भवद्विधेयः

निवेदयिता

# विद्यालये प्रवेशार्थं निवेदनपत्रम्

स्थानम्

दिनांकः

सम्माननीयेषु प्रधानाचार्यमहाभागेषु

सविनयं प्रणतिपुरस्सरं निवेदनम्

मान्यवर्याः !

अहम् अस्मिन् वर्षे—विद्यालयत—परीक्षां द्वितीयश्रेण्याम् उत्तीर्णवान् अस्मि। अतः परं भवतां विद्यालये अहम् प्रवेष्टुं कामये, तदर्थम् इदं प्रार्थनपत्रं प्रस्तूयते। अन्यच्च छात्रवृत्तिपुस्तकादिसौविध्यं लब्धुमपि सहैव निवेदनं क्रियते। यतो हि मम आर्थिकी स्थितिः शोभना नास्ति। गतवर्षे अध्ययन-संस्थायां छात्रवृत्तेः पुस्तकानाञ्च असौविध्येन मम अध्ययनं समुचितं न अभूत् येन मया प्रथमश्रेणी प्राप्तुं न अशक्यत। अतः भवन्तं सादरम् अनुरुणध्मि यद् भवद्भिः समुचितछात्रवृत्तिपुस्तकप्रदानपुरस्सरं मम प्रवेशः विधातव्यः। येन अहं सुष्ठुतया अध्ययनं कृत्वा उच्चश्रेण्यां उत्तीर्णो भवानि, आशासे श्रीमन्तः उपर्युक्तं निवेदनं स्वीकृत्य अकिञ्चनमिमं जनं दयार्द्रदृष्टि-पातेन अनुग्रहीष्यन्ति।

भावत्को वशंवदः

# छात्रावासे स्थानं प्राप्तुं निवेदनम्

स्थानम्

दिनांकः

माननीयेषु अधीक्षकमहाभागेषु

सप्रणतिपुरस्सरं निवेदनम

मान्याः !

भवतां विद्यालये मम प्रवेशः अद्यतः मासत्रयात् पूर्वं संजातः आसीत्। अद्यावधि अहं नगरे एकस्य सम्बन्धिनः गृहे निवसामि स्म। परं तत्र परिवारस्य बालाः बालिकाश्च अध्ययने बाधाम् उत्पादयन्ति येन अध्ययने महती बाधा भवति। अतः अहं विद्यालयस्य छात्रावासे स्थानं प्राप्तुम् इच्छामि, तदर्थं मया अपेक्षितं छात्रावास-शुल्कमपि प्रदत्तमस्ति।

अतः भवत्सु सादरं निवेदयामि यद् भवद्भिः मह्यं कृपया छात्रावासे स्थानं प्रदाय अहम् अनुग्रहणीयः।

प्रार्थी

भवतां लघुतमः शिष्यः

# अवकाशार्थं प्रार्थनापत्रम्

स्थानम्
दिनांक:

श्रीमत्सु पाठशालाध्यक्षमहोदयेषु
सादरं मम प्रणामाः

मान्याः !

मम गृहे कानिचिद् एवंविधानि कार्याणि वर्तन्ते येषां सम्पादनार्थं मम पिता-मां न्ययोजयत्। गृहे कानिचित् प्रकीर्णानि वस्तूनि समुचिते स्थाने स्थापनीयानि सन्ति अन्यानि अपि बहुविधानि कार्याणि मया करणीयानि वर्तन्ते। अतः तदर्थं भवन्तः दिनत्रयस्य अवकाशं याच्यन्ते।

आशासे भवन्तः अवकाशं प्रदाय ममोपरि महतीं कृपां विधास्यन्ति।

अवकाश-प्रार्थी
भवदीयः

# अवकाशार्थं निवेदनम्

स्थानम्:

दिनांकः

श्रीमत्सु प्रचार्यमहाभागेषु !

सविनयं निवेदनम्

मान्याः

अहं भवतां विद्यालयस्य पञ्चमकक्षायाः नियमितः छात्रोऽस्मि। मम गृहे ज्येष्ठभ्रातुः उपनयनसंस्कारः वर्तते। तस्मिन् संस्कारे उपस्थास्य:-मानानाम् अतिथीनां सम्बन्धिजनानाञ्च उचितनिवासव्यवस्थादिकं कर्तुं तेषाञ्च स्वागतं सम्मानञ्च विधातुं मम उपस्थितिः गृहे अत्यन्तम् अपेक्ष्यते। एतदर्थं अहं भवन्तं सादरं प्रार्थये यद् भवद्भिः उपनयनसंस्कारे उपस्थातुं तत्र च साहाय्यं कर्तुं दिनत्रयस्य दिनचतुष्टयस्य वा अवकाशं प्रदाय अहम् अनुग्रहीतव्यः।

विनीतप्रार्थी

# चिकित्सावकाशं ग्रहीतुं प्रार्थनापत्रम्

स्थानम्

दिनांकः

श्रद्धेयाः प्रधानाचार्यमहाभागाः,

विद्यालयः

मान्यवर्य्याः।

अहं दिनद्वयात् शीतज्वरेण अतीव पीडितोऽस्मि। ज्वरेण सह हस्तयोः शिरसि च बलवती पीडाऽपिवर्तते येन अत्यधिकं कष्टमनुभवामि। ह्यस्तने दिवसे चिकित्सकस्य सकाशाद् औषधं गृहीत्वा भक्षितमासीत् परं ज्वरे काचिदपि न्यूनता न जाता प्रत्युद् अद्य रात्रौ पुनः ज्वरस्य तापमानं त्रिसंख्योत्तर-एकशतं यावद् अभवत्, येन मम गृहस्य सर्वे जनाः शोकाकुलाः भूत्वा झटित्येव चिकित्सकमहोदयम् आहूतवन्तः। चिकित्सकमहोदयेन प्रदत्तानि औषधानि अहं सुष्ठुतया उष्णेन जलेन सह भक्षयामि। सम्प्रति मम शरीरे अतीव दौर्बल्यं जातमस्ति। चिकित्सकस्य कथनानुसारेण ज्वरसमाप्त्यनन्तरं पूर्णतः स्वस्थतां लब्धुं सप्तानाम् अष्टानां वा दिनानां विश्रामः अपेक्षितः अस्ति।

अतः भवन्तं सादरं निवेदनपूर्वकम् अहं प्रार्थये यत् पूर्णतः स्वास्थ्यं लब्धुं भवद्भिः कृपया नवानां दशानां वा दिनानाम् अवकाशः मह्यं प्रदेयः। येन अहं स्वस्थो भूत्वा पुनः अध्ययने सुष्ठुतया प्रवृत्तो भवितुं शक्नवानि।

कृपाकणाकांक्षी

भवदीयः

## विवाहे सम्मिलितुम् अवकाशाय निवेदनम्



स्थानम्

दिनांकः

समादरणीयाः प्राचार्यमहाभागाः,

विद्यालयः

मान्याः !

मम एकः प्रियः सुहृत् स्वविवाहस्य निमन्त्रणपत्रं मत्समीपे प्रेषितवान् अस्ति। निमन्त्रणपत्रेण साकं प्रेषिते हस्तलिखिते पत्रे तेन विशेषतः इदं निर्दिष्टम् अस्ति। "प्रियमित्र ! भवता अवश्यमेव मम विवाहे दिनद्वयात् पूर्वं उपस्थातव्यम्, यतः अहमपि भवतः विवाहे दिनत्रयात् प्राग् उपस्थितवान् आसम्। यदिभवता न उपस्थास्यते तर्हि अहं बहुदुःखी भविष्यामि।" किं करवाणि ? इतस्तु परीक्षायां केवलं दश-दिनानि एव अवशिष्टानि सन्ति, तत्र मित्रस्य विवाहे सामाजिकदृष्ट्या व्यावहारिकदृष्ट्या च उपस्थितिरपि नूनम् अपेक्ष्यते। अतः परीक्षायाः सामीप्यस्य ध्यानं कुर्वता मया केवलं तत्र सम्मिलितुं दिनद्वयस्यैव अवकाशःयाच्यते। यतो हि यथा कृषकस्य कृते कृषिकार्यंमहत्त्वपूर्णं भवति तथैव विद्यार्थिनः कृते परीक्षा अपि महत्त्वपूर्णा भवति। परीक्षायाः समीपस्थानि, दिनानि बहुमहत्त्वपूर्णानि भवन्ति, तेनैव कारणेन अल्पदिनानाम् एव अवकाशः मया याच्यते।

आशासे मम सुहृदः एतस्मिन् मङ्गलमये कर्मणि उपस्थातुं मह्यं दिनद्वयात्मकम् अवकाशं प्रदाय ममोपरि महतीं कृपां विधास्यन्ति तत्र श्रीमन्तः।

विनीतनिवेदकः

# शुल्कमुक्तये प्रार्थनापत्रम्



स्थानम्

दिनांक

मान्याः प्रधानाचार्यमहाभागाः

विद्यालयः

महोदयाः !

अहं भवतां विद्यालये——……कक्षायां नियमितरूपेण अध्ययनं कुर्वाणः अस्मि। कतिपयदिनेभ्यः पूर्वं शुल्कं प्रदातुं एका सूचना प्रकाशिता आसीत्, तत्र छात्राणां कृते अयं निर्देशः समुल्लिखितः आसीत् यत् "सर्वे छात्राः पञ्चदश-तारिकां यावत् शिक्षाशुल्कं उपस्थापयन्तु, अन्यथा परीक्षाफलम् अवरुद्धं करिष्यते।" मान्याः, अहम् शुल्क-राशेः प्रदाने सर्वथा असमर्थोऽस्मि। यतो हि मम आर्थिकी स्थितिः समीचीना नास्ति। मदीये गृहे किञ्चित् कृषिकार्यं भवति तेन कथञ्चिद् जीविका—निर्वाहः भवति, कश्चिदपि जनः सेवाकार्यं कृत्वा धनार्जनं न करोति। येन अहं शुल्कं दातुं न शक्नोमि। एतदर्थं भवतः प्रतिकरबद्धा प्रार्थना वर्तते यद् भवद्भिः मम, दयनीयायाः आर्थिकस्थितेः ध्यानं कुर्वद्भिः कृपया शुल्क-मुक्तिः विधातव्या, येन परीक्षाफल-प्रकाशने कश्चिदपि अवरोधः न भवेत्।

अस्याः महत्याः कृपायाः कृते आजीवनं भवतां कृतज्ञः स्थास्यामि।

भवदीयः आज्ञाकारी छात्रः

## चरित्रप्रमाणपत्रस्य सम्बन्धे

आदरणीयाः प्राचार्यमहाभागाः, स्थानम्

——————विद्यालयः दिनांकः

सम्मान्याः

मया सम्प्रति भवतां विद्यालये………कक्षायाम् अध्ययनं क्रियते। विगतवर्षे मया भवतः एव विद्यालयात्………परीक्षा अतीव उच्चैः अङ्कैः सह समुत्तीर्णा आसीत्। एकस्मिन् विद्यालये कानिचित् शिक्षक-पदानि रिक्तानि जातानि। तत्र आवेदनं कर्तुं मम पार्श्वे सर्वविधा अर्हता वर्तते, परं प्रधानाचार्येण प्रमाणितम् एकं चरित्र-प्रमाण-पत्रं तत्र अपेक्ष्यते। तद्विना तु नियुक्तिः कथमपि न सम्भाव्यते यतो हि तस्य माध्यमेन छात्रस्य योग्यतायाः, आचरणस्य, वैशिष्ट्यस्य, जन्मतिथेश्च परिज्ञानं क्रियते। अतस्तत्र नियुक्त्यै चरित्रप्रमाणपत्रम् अत्यन्तम् आवश्यकतां भजते।

अतः सविनयं निवेदनं मया क्रियते यत् भवद्भिः नियुक्त्यै शुभाशिषं प्रदाय चरित्रप्रमाणपत्रप्रदानेन अहम् अनुग्राह्यः।

नम्र-निवेदकः

——————

# त्यागप्रमाणपत्रस्य प्राप्त्यै प्रार्थनापत्रम्

स्थानम्

दिनांकः

श्रद्धेयाः प्रधानाचार्यमहाभागाः,

________________ विद्यालयः

महामान्याः

अहम् अस्मिन् वर्षे भवतां विद्यालये ·· ··· ···कक्षायाम्, अधीयानः आसम्, किन्तु मम पूज्यपितुः ··· ··· ··· स्थानान्तरणं जातमस्ति, येन त्यक्तुं नेच्छताऽपि मया अयं विद्यालयः त्यक्तव्यो भवति। अस्य विद्यालयस्य सर्वेऽपि समादरणीयाः अध्यापकमहानुभावाः शिष्टाः विनम्राः सदाचार-परायणाश्च सन्ति, तथा, स्वकीयविषयेषु योग्याः अपि वर्तन्ते। तेषां सकाशात् मया यः स्नेहः यच्च सद्ज्ञानं लब्धमस्ति, तत्कदापि न विस्मर्तुं शक्यते। वस्तुतः एवंविधः स्नेहपूर्णः व्यवहारः यदि सर्वत्र समेषां अध्यापकानां छात्राणाञ्च मध्ये परस्परं स्थापितो भवेत् तर्हि शिक्षायाः सम्यक् प्रचारः भवितुमर्हति। अस्माद् विद्यालयाद् गमने मम महत्कष्टं भवति, किन्तु किं करवाणि ? अत्राहम् एकाकी कथमपि स्थातुं न शक्नोमि।

अतः भवन्तः सादरं विनिवेद्यन्ते यद् मम आगामिनः शिक्षाजीवनस्य प्रगतये शुभाशीर्वादं प्रदाय त्यागप्रमाणपत्रप्रदानेन अहम् कृपया अनुगृहीतव्यः तत्रभवद्भिः।

निवेदयिता

________________

# विद्यालयस्य कासाञ्चिद् अव्यवस्थानां निवारणसम्बन्धे



समादरणीयाः व्यवस्थापकमहाभागाः; स्थानम्

——————————विद्यालयः दिनांकः

मान्याः !

सम्प्रति विद्यालये जायमानानां कासाञ्चिद् अव्यवस्थानां कारणेन छात्राणाम् अध्ययने महती बाधा भवति। तत्र एका अव्यवस्था इयं वर्तते यत् कर्मचारिणा अध्ययनकक्षस्योद्घाटनं विलम्बेन क्रियते, येन अस्माभिः छात्रैः विद्यालयस्य परिसरे एव इतस्ततः समयः यापनीयो भवति। कदाचित् कक्षे समुद्घाटिते सति, आसन्दिकाः अव्यवस्थिताः तिष्ठन्ति येन कक्षद्वारे एव व्यवस्थायाः पूर्वं यावद् स्थातव्यं भवति। इत्थम् आभ्याम् अव्यवस्थाभ्यां प्रतिदिनं छात्राणाम् अर्धघटिकायाः समयः व्यर्थः गच्छति। एवञ्च कर्मचारी घंटिकावादनं समयेन न करोति। घंटिकावादनकाले कदाचित् शेते, कदाचिच्च भ्रमति, येन वयम् अन्यासु कक्षासु विलम्बेन प्राप्नुमः। एतदतिरिक्ते अन्येऽपि द्वे अध्ययनसम्बन्धिन्यौ मुख्ये अव्यवस्थे वर्तेते। तयोः प्रथमा अव्यवस्था इयमस्ति—अध्यापकाः प्रायशः अध्यापनाय निर्धारितसमयस्य अतिक्रमणं कृत्वा कक्षायां समायान्ति येन अध्ययनस्य महती क्षतिः जायते। अन्यच्च कैश्चित् त्रिचतुरैः उद्दण्डैः छात्रैः इतः दिनद्वयाद् अध्ययनकक्षायाम् अन्येषां पठनशीलानां छात्राणां कृते महती बाधा समुत्पाद्यते। तैः छात्रैः अश्लीलानि गीतानि गीयन्ते, अपशब्दाः उच्चार्यन्ते, अनावश्यकयश्च वार्ताः विधीयन्ते। यदा विनम्रतापूर्वकं ते अवरुध्यन्ते तदा युद्धं कर्तुं ते तत्पराः जायन्ते।

अतः अस्माकं सर्वेषां छात्राणां सामूहिकं निवेदनमस्ति यत् कृपया इमाः सर्वाः अव्यवस्थाः भवद्भिः द्रुतमेव निवारणीयाः, येन अस्माकम् अध्ययनं निर्बाधं प्रचलितं स्यात्।

विनयावनताः

——————

## विद्यालये पाक्षिकसभायाः समायोजनाय सामूहिकनिवेदनम्

स्थानम्

माान्याः सांस्कृतिक-मन्त्रिणः !

दिनांकः

———————— विद्यालयः

महोदयाः !

छात्राणां बौद्धिकशैक्षिकविकासाय सांस्कृतिक-कार्यक्रमाणां महनीयं स्थानमस्ति, इति समानुभवः वर्तते। परं सम्प्रति विद्यालयेषु प्रायः सांस्कृतिकाः कार्यक्रमाः नायोज्यन्ते, येन तत्रत्याः छात्राः कस्मिश्चिदपि विषये भाषणप्रदानावसरे स्वकीयविचाराणां क्रमशः संयोजनं तथा शुद्धभाषाद्वारा तेषां प्रकाशनं न कर्तुम् अर्हन्ति, प्रत्युत पदे-पदे स्खलिताः भवन्ति तथा केचित्तु सुष्ठुतया स्वकीयं परिचयमपि शुद्धभाषया न दातुं शक्नुवन्ति। इयमेव स्थितिः अस्माकं विद्यालयस्य छात्राणामस्ति। अतः अस्माकं विद्यालये प्रतिसप्ताहं प्रतिपक्षं वा एकदा अन्त्याक्षरी-कवितापाठ-प्रहसन-सुस्वरगीत-नाटक-भाषण-वादविवादप्रभृतीनां कार्यक्रमाणां सम्पादनार्थम् एका सभा अवश्यम् आयोजनीया यस्यां भागग्रहणेन वयं केनचिदपि सह कस्मिश्चिदपि विषये निर्बाधं वार्तां कर्तुं क्षमाः भवितुं शक्नवाम, तथा एतेष्वेव विषयेषु, आयोजयिष्यमाणासु प्रतियोगितासु भागं गृहीत्वा पुरस्कारं च लब्ध्वा आत्मनः विद्यालस्य च नाम गौरवान्वितं कर्तुम् अर्हामः।

आशास्यते यद् अस्माकं ज्ञानवर्धनाय भवन्तः इदं निवेदनं स्वीकृत्य अवश्यमेव सभायाः समायोजनं कारयिष्यन्ति इति।

भवत्कृपाकांक्षिणः

प्रार्थयितारः

# शोधविषयस्य परिवर्तनार्थं पत्रम्

श्रीमन्तः विभागाध्यक्षमहोदयाः, स्थानम्

————————विश्वविद्यालयः दिनाङ्कः

मान्याः !

पी० एच० डी० उपाधिप्राप्त्यै संस्कृत-विभागस्य अध्यक्षस्य/उपाचार्यस्य/प्रवक्तुः डा०……महोदयस्य निर्देशने अहं शोधकार्यं कुर्वाणः अस्मि। मम पञ्जीकरणं……वर्षे सञ्जातमासीत्। मम शोधविषयः साहित्यशास्त्रेण सम्बद्धो वर्तते, परं आरम्भतः मम रुचिः दर्शनशास्त्रस्य अध्ययने वर्तते। विषय-निर्धारणकाले निर्देशकमहोदयस्य कथनानुसारेण मया सः विषयः गृहीतः किन्तु मम तस्य विषयस्य आरम्भतः अपि किञ्चिदपि ज्ञानं नास्ति येन अहं तस्मिन् विषये शोधकार्यं विधातुं सर्वथा असमर्थः अस्मि। अतः भवन्तं प्रार्थये यत् भवद्भिः दर्शनशास्त्रेण सम्बद्धः कश्चन शोधविषयः कृपया निर्धारणीयः येन अहं महता श्रमेण तत्र संलग्नो भूत्वा शोधकार्यं करवाणि।

आशासे भवन्तः मम वर्तमानस्य शोधविषयस्य परिवर्तनं विधाय दर्शन-शास्त्रेण सम्बद्धं कमपि विषयं निर्धारयिष्यन्ति।

एतदर्थम् अहम् आजीवनं भवताम् आभारी स्थास्यामि।

भवदीयः

शोधकर्ता छात्रः

————————

# पुस्तकप्राप्ति-विषये पत्रम्

मान्नीयाः पुस्तकाध्यक्षमहाभागाः, स्थानम्

——————विद्यालयः दिनांकः

मया भवतां विद्यालयतः — — ... परीक्षामुत्तीर्य ... ... — कक्षायां प्रवेशः गृहीतोऽस्ति। विद्यालयस्य सूचनापट्टे — ... — तारिकायां पुस्तकालयात् पुस्तक-प्राप्त्यर्थम् एका सूचना प्रकाशिता आसीत्, यत्र छात्राणां कृते अयं निर्देशः आसीत्—ये छात्राः पुस्तकानि प्राप्तुम् इच्छन्ति ते पुस्तकाध्यक्षस्य सकाशाद् आवेदनपत्रम् आदाय, सुष्ठुतया तत्प्रपूर्य समुत्तीर्णपरीक्षाणां प्रमाणितलब्धाङ्कप्रतिलिपिभिः साकं — ... ... — तारिकां यावत् विद्यालयीये कार्यालये उपस्थापयन्तु। सूचनानुसारेण मया श्वः एव आवेदनपत्रं दास्यते परं तेनैव सह एकं मम इदं निवेदनपत्रं संलग्नं वर्तते तस्याशयः ईदृशः—अहमतीव निर्धनोऽस्मि। अस्य वर्षस्य च परीक्षायाम् अतीव स्थूलाः ग्रन्थाः निर्धारिताः सन्ति, येषां मूल्यम् अत्यधिकं विद्यते, तेन मया ते ग्रन्थाः क्रेतुं न शक्यन्ते।

अतः तदर्थं भवन्तं प्रार्थये यद् भवन्तः मम दयनीयस्थितेः उपरि ध्यानं कुर्वन्तः कृपया सर्वाणि अपि अपेक्षितानि पुस्तकानि दापयन्तु।

आशासे यत् परीक्षायां मम साफल्यलाभाय अवश्यमेव भवन्तः उपरिनिर्दिष्टाम् अपेक्षां पूरयिष्यन्ति इति।

अस्य महतः औदार्यस्य कृते सर्वदा भवताम् कृतज्ञः स्यास्यामि।

विनम्र-प्रार्थी

——————

## उपालम्भ-पत्रम्

माननीयेषु सुहृत्प्रवरेषु,  स्थानम्
सविनयं प्रणामाञ्जलयः  दिनाङ्कः

बहूनि दिनानि व्यतीतानि परं भवताम् एकमपि पत्रं मम हस्तगतं न जातम्। भवन्तः सम्प्रति कुत्र वर्तन्ते किं च कार्यं कुर्वन्ति इति किमपि मम विदितं नास्ति। अत एव सम्प्रति न केवलम् अहम् एव प्रत्युत मम परिवारस्य सर्वे जनाः अपि चिन्ताकुलाः सन्ति। आशासे, इतः परं भवन्तः पत्रप्रेषणे विलम्बं न करिष्यन्ति शीघ्रमेव च स्वकीयेन शुभसमाचारेण सर्वान् अपि अस्मान् आनन्दयिष्यन्ति।

सम्प्रति अहं सकुशलः सन् विद्यालये सम्यक् अध्ययनं करोमि। गृहस्य परिवारस्य च सर्वः समाचारः समीचीनः एव अस्ति। भवता स्वकीयं पारिवारिकं च सर्वं वृत्तम् अविलम्बितं लेखनीयं येन अस्माकं चिन्ता अपगता स्यात्।

भवतां वशंवदः

__________

## यात्राविषयकं पत्रम्

स्थानम्
दिनांकः

**मित्रवर श्री श्रीधरगुप्त !**

मन्ये, भवान् अद्य सकुशलं गृहं प्राप्तः स्यात्। मार्गे आरक्षणं लब्धं न वा? अन्यत् अपि मार्गे यत् किञ्चित् सुखं कष्टं वा अनुभूतं तत् सर्वं त्वरितं सूचनीयम्। विलम्बं न कुर्याः।

तव कुशलाकांक्षी

__________

# दीपावल्याम् आगमनाय आमन्त्रणम्

स्थानम्

स्नेहभाजनेषु मित्रवर्य्येषु

दिनांकः

सस्नेह-प्रणतिपूर्वकम्

सप्ताहद्वयात् प्राक् प्रेषितं त्वदीयं पत्रं मम अद्य हस्तगतं जातम्। मन्ये, डाकव्यवस्थायाः दोषात् पत्रप्राप्तौ विलम्बः सञ्जातः। पत्रद्वारा त्वदीयं तव परिवारस्य च कुशलवृत्तं ज्ञात्वा प्रसन्नता जाता।

आगामिन्यां दीपावल्यां त्वं वाराणसीम् आगमिष्यसीति विदित्वा प्रफुल्लितं मे मानसम्। बहोः कालात् आवयोः मिलनं न जातम्। तेन त्वां द्रष्टुं मम महती उत्कण्ठा आसीत्। इदानीं तव अत्र आगमनेन, कानिचिद् दिनानि सहवासेन, त्वया सह भोजन-पानादिना, प्रेमालापेन भ्रमणेन च मम महान् प्रमोदः भविष्यति, मम परिवारस्य च। दीपावलीसमये अन्ये अपि केचन सुहृदः सम्बन्धिनश्च मम गृहम् आगच्छन्ति। अतः तैः सह अपि तव साक्षात्कारः सुखप्रदः स्यात्।

अत्र वयं सर्वे तव आगमनं प्रतीक्षमाणाः स्मः। अस्मिन् कार्यक्रमे परिवर्तनं न कर्तव्यम्, यदैव च अवकाशः स्यात् तदैव प्रस्थानं विधातव्यम्।

तव शुभागमनप्रतीक्षारतः

______________

## परीक्षाविषयकं पत्रम्

प्रियमित्र प्रमोद, स्थानम्

सस्नेहं शुभाशिषः दिनाङ्कः

मन्ये, तव परीक्षा सम्प्रति समाप्तिं गता स्यात्। परीक्षायां त्वया कानि कानि प्रश्नपत्राणि सम्यक् समाहितानि, केषां केषां च प्रश्नानां समाधाने त्रुटिः जाता, के के च प्रश्नाः अनुत्तरिताः एव परित्यक्ताः? परीक्षाफले च तव कीदृशः विश्वासः? इदं सर्वं शीघ्रमेव पत्रद्वारा सूचनीयम्। विलम्बः न विधेयः। इदं ज्ञातुं मम महती उत्सुकता वर्तते।

तव अभ्युदयाकांक्षी

————

## परीक्षाविषयकं पत्रम्

सम्मानार्हाः सुहृद्वर्य्याः, स्थानम्

सविनयं नमस्करोमि दिनांङ्कः

इदानीम् एव भवदीयं कृपापत्रं प्राप्तम्। उत्तरे इदं निवेदयतः मम महान् हर्षः भवति यत् परीक्षायां मया सर्वे अपि प्रश्नाः सम्यक् उत्तरिताः। काचित् अपि त्रुटिः न जाता। अतः एव परीक्षाफले अपि सर्वथा आशान्वितः अस्मि।

अद्य इयं संक्षिप्ता सूचना मया दत्ता। शीघ्रमेव विस्तृतविवरणं प्रेषयिष्यामि सप्ताहाभ्यन्तरे एव।

स्नेहाकांक्षी

भवदीयः प्रमोदः

————

# स्वास्थ्यविषयकं पत्रम्

प्रिय सखे, शैवाल ! स्थानम्

सस्नेहं शुभाशीर्वचनानि दिनांक:

कस्यचित् मित्रस्य मुखात् इदं ज्ञात्वा मम महती चिन्ता जाता यत् तव स्वास्थ्यं सम्प्रति समीचीनं नास्ति । अनेन च कारणेन तव दुर्बलता अपि प्रतिदिनं वर्धमाना वर्तते ।

अस्वस्थतां गतस्य तव मासाधिकः कालः व्यतीतः परं त्वया अद्यावधि तस्य सूचना मम सविधे न प्रेषिता इति दुःखस्य आश्चर्यस्य च विषयः अस्ति । त्वं खलु इतः बहुदूरे निवससि । तत्र कस्यापि गमने आगमने वा महान् व्ययः भवति । अतः समाचारज्ञानाय पत्राद् ऋते नास्ति कश्चन अन्यः उपायः । डाकव्यवस्थायाः दोषात् पत्राणि अपि तु महतः विलम्बात् लभ्यन्ते । परं तत्र न वयं किञ्चित् कर्तुं प्रभवामः । तस्मात् अस्वास्थ्यदशायां यथाशीघ्रं पत्रस्य प्रषणम् एव परमावश्यकं कर्तव्यं भवति । इदं त्वया कदाचिद् अपि न विस्मरणीयम् ।

मम इदं पत्रं लब्ध्वा तत्कालं त्वया उत्तरं प्रेषणीयं स्वास्थ्यस्य च विस्तृतं विवरणं लेखनीयम् । अहं महता औत्सुक्येन तव उत्तरस्य प्रतीक्षां कुर्वाणः भविष्यामि । ईश्वरकृपया शुभं ते भूयात् ।

मङ्गलाकांक्षी

____________

# उपालम्भ-पत्रम्



मान्यवरेषु सुहृन्मूर्धन्येषु, स्थानम्

सादरं प्रणतिपुरस्सरं निवेदनम् दिनांकः

चिरकालात् भवदीयपत्रस्य प्रतीक्षां करोमि। पूर्वं भवन्तः प्रायेण प्रतिमासं पत्रं प्रेषयन्ति स्म, मम कुशलवृत्तं महता स्नेहेन पृच्छन्ति स्म, अध्ययनविषये मम मार्गदर्शनं कुर्वन्ति स्म, पत्रप्रेषणे मयि विलम्बं कुर्वति मां बहु उपालभन्ते स्म। परं सम्प्रति षड् सप्त वा मासाः व्यतीताः, भवतः एकम् अपि पत्रं न प्राप्तम्।

अत्र किं कारणम् इति चिन्तया मम मनः नितरां व्याकुलं वर्तते। मम केनापि अपराधेन भवन्तः कुपिताः किम्? कार्यव्यस्ततया पत्रलेखनाय अवसरः वा न लभ्यते? मयि भवतः चिरन्तनः स्नेहः सम्प्रति विलोपं वा गतः? आत्मनः भ्रातृषु पुत्रेषु च निरन्तरं रममाणस्य भवतः मम सर्वथा विस्मरणम् एव जातं किम्? एवमादिकाः विविधाः विकल्पाः मम हृदये सम्प्रति उत्पद्यन्ते विलीयन्ते च। अतः सम्प्रति कृपया यथाशीघ्रं पत्रं प्रेषयित्वा मम आशंकायाः निवारणं कर्तव्यं येन मम मनसः चिन्ता अशान्तिः आकुलता च अपगता स्यात्।

अस्मिन् पत्रे न इतः अधिकं किञ्चित् लेखितुं कामये। अन्यत् सर्वं पत्रान्तरे निवेदयिष्यामि।

कृपाकांक्षी

__________

# विवाहविषयकं पत्रम्



प्रियवयस्य श्रीविनोदशर्मन्, स्थानम्

मदीयाः सस्नेहं शुभाशिषः दिनांकः

तव ज्येष्ठभ्रातुः मुखाद् इदं श्रुत्वा मे सुमहान् हर्षः सञ्जातः यत् आगामिषु मासेषु तव विवाहः निश्चितप्रायः वर्तते । इदं च सर्वथा उचितं समयानुरूपं च अहं मन्ये । यतः त्वं स्वकीये विषये एम० ए० कक्षायां प्रथमश्रेण्यां समुत्तीर्णः । प्रतियोगितासु अनेके उच्चतमाः पुरस्काराः अपि प्राप्ताः । संस्कृतभाषायाः साहित्ये अपि तव असाधारणं वैदुष्यं सर्वविदितं वर्तते । एभिः कारणैः महाविद्यालस्य प्राचार्यपदे तव नियुक्तिः अपि जाता येन आर्थिकदृष्ट्या त्वं सम्प्रति आत्मनिर्भरतां गतः असि । अस्याम् अवस्थायां गृहस्थाश्रमे प्रवेशः सर्वथा समुचितः एव ।

परन्तु विवाहे सर्वाधिकं महत्त्वपूर्णं कार्यं कन्यायाः चयनं भवति । तव पित्रादिभिः नूनं त्वदनुरूपायाः एव कन्यायाः चयनं कृतं स्यात् इति अहं विश्वसिमि । परं "तिलकदहेज" विषये यथा तेषां दुराग्रहः कठोरता वा न स्यात् तथा सविशेषं प्रयतनीयम् । त्वया अपि श्वसुरालयं गत्वा "खिचड़ी" भोजनसमये कस्यापि वस्तुनः कृते लोभः न प्रदर्शनीयः न वा आग्रहः कर्तव्यः । अस्याः कुप्रथायाः निवारणं त्वादृशानाम् एव वराणां प्रमुखं कर्तव्यम् अस्ति । अस्तु, विवाहानन्तरं पत्रं दत्त्वा विवाहविषयकं सर्वं वृत्तं सविस्तरं सूचनीयम् ।

भावत्कः

__________

## अवकाशकालिककृत्यविषयकं पत्रम्

प्रिय श्री जितेन्द्रकुमार ! स्थानम्

शुभाः आशिषः विलसन्तु दिनांकः

त्वया गमनकाले कथितं यद् गृहं गत्वा त्वरितमेव पत्रं प्रेषयिष्यामि परन्तु अद्य मासाधिके काले गते अपि तव किमपि पत्रं न समागतं न वा मौखिकः एव कश्चन समाचारः प्रेषितः। तव ग्रामः न खलु इतः बहुदूरवर्ती। अनेके जनाः अत्र प्रतिदिनं ततः आगच्छन्ति। तेभ्यः अनायासेन पत्रांकितं मौखिकं वा कुशलवृत्तं प्रेषयितुं शक्यम् आसीत्। परं तदपि त्वया न विहितम्। आशासे, न खलु इतः परं त्वं ईदृशं प्रमादं करिष्यसि कदाचित्।

इदानीं गृहे किं करोषि? तत्र बालकानां कोलाहले किञ्चित् पठनं लेखनं वा संभवति किम्? अथवा गृहकार्येषु व्यापृतः असि? मित्राणां सम्बन्धिनां वा गृहे भ्रमणं भवति? बहवः छात्राः अवकाशदिनानि प्रायः भ्रमणे एव अतिवाहयन्ति।

परन्तु अवकाशकाले व्यतीते सुस्वादुभोजनलोभेन गृहे न स्थातव्यम्। अस्मिन् वर्षे यथाकालं कक्षाः प्रचलिष्यन्ति। तत्र ये यथासमयं न उपस्थिताः भविष्यन्ति तेषां छात्रावाससुविधा अपि समाप्ता भविष्यति। अधिकविलम्बे जाते विद्यालयात् निष्कासनमपि संभवति। तस्मात् आगमने कालातिपातः न कर्तव्यः इति मे निवेदनम्।

तव हिताकांक्षी

__________

## शीघ्रम् आगमनाय अनुरोधपत्रम्



स्थानम्

परमप्रिय दिनेशवर्मन् !

दिनांक:

सस्नेहप्रणामा:

यस्मिन् दिने त्वं विद्यालयाद् अवकाशं गृहीत्वा गृहं गतवान् तदारभ्य एव अहं प्रकोष्ठे एकाकी तिष्ठन् कथं कथमपि दिनं रात्रिं-च अतिवाहयामि । अध्ययने वा लेखने वा न इदानीं तादृशी मम अभिरुचि: यथा तव सहवासे आसीत् । विद्यालये अपि कक्षायां, खेलने वा मन: प्रसन्नं न तिष्ठति । अत: त्वं गृहे अधिकदिनानि न तिष्ठे: इति मम हार्दिक: अनुरोध: वर्तते । यदि तव गृहे अधिकं निवासं कर्तुं समीहा स्यात्, आवां कदाचित् सहैव चलिष्याव: यथेच्छं च गृहे स्थास्याव: ।

आशां करोमि, मम अनुरोधं स्वीकृत्य शीघ्रमेव गृहात् प्रस्थानं करिष्यसि इति ।

तव आगमनं प्रतीक्षमाण:

_______________

## पुस्तकानाम् आनयनाय अनुरोधपत्रम्

स्थानम्

दिनांक:

मित्रवर !

सखेदम् इदं निवेदयामि यद् गृहाद् आगमनकाले त्वरायां मया अनेकानि पुस्तकानि गृहे एव परित्यक्तानि । तेन अत्र अध्ययने महती बाधा भवति । अत: त्वं मम गृहं गत्वा ततश्च मम पुस्तकानि गृहीत्वा अत्र आगमिष्यसि । पुस्तकानि मम अध्ययनकक्षे एव क्वचित् काष्ठफलके स्थापितानि भविष्यन्ति । कृपया इदं कथमपि न विस्मर्तव्यम् ।

त्वदीय:

_______________

## क्षमाप्रदानाय अनुरोधपत्रम्

सम्मानास्पदेषु मित्रवर्येषु, स्थानम्

प्रणतिपुरस्सरं निवेदनम् दिनांकः

आशासे, भवन्तः सानन्दं सकुशलं च स्वस्थानं प्राप्ताः स्युः। भवन्तः यदवधि अस्माकं गृहे अवसन् तदवधि सर्वेषाम् अपि नः सुमहान् आनन्दः आसीत्। भवतां मनोहरया आकृत्या, मधुरेण आलापेन, स्नेहपूर्णेन सरलेन च व्यवहारेण परिवारस्य सर्वे अपि बालाः वृद्धाः युवानः पुरुषाः स्त्रियः भृत्यजनाश्च परमं प्रमोदम् अनुभवन्ति स्म। भवदीयैः सरस-मधुरैः विनोदपूर्णैश्च कथोपकथनैः मम गृहस्य वातावरणं सदैव उल्लासमयं तिष्ठति स्म। परं सम्प्रति भवत्सु गतेषु सर्वे अपि काञ्चित् रिक्तताम् इव अनुभवन्ति विमनायमानाश्च दृश्यन्ते। दिने एकवारं द्विवारं वा अवश्यमेव भवदीया चर्चा भवति तेन च वयं मनो विनोदयामः।

इतः गमनानन्तरं भवतां किमपि पत्रं न अद्यावधि आगतम्। मन्ये, भवन्तः सुदूरयात्रायाः कारणात् भृशं श्रान्ताः भविष्यन्ति। कृपया श्रान्तौ निवृत्तायां मनसि च स्वस्थे जाते पत्रं लेखनीयं कुशलवृत्तं च सूचनीयम्। अत्र च निवासकाले अस्माकं प्रमादवशात् यदि भवतां किमपि असौविध्यम्, कष्टं रुचिविरुद्धं वा जातं स्यात् तर्हि तदर्थं वयं सर्वे क्षमां याचामहे।

उत्तराकांक्षी

________

वाराणसीतः

७-५-८४

सम्मानार्हेषु मित्रवर्येषु !

नमस्काराः

अत्राहं कुशलतां भजमानः तव कुशलार्थं ईश्वरं प्रार्थये। अद्यावधि तव किमपि पत्रं नाधिगतम्। मन्ये, अहं तव विस्मृतिपथं गतोऽस्मि। मित्रवर, हरिश्चन्द्रमाध्यमिकविद्यालये अध्ययनं कुर्वतोः आवयोः एतादृशी प्रगाढा मैत्री जाता या कदापि विस्मर्तुं न शक्यते। सा कदापि न्यूनतां न गमिष्यति। माध्यमिककक्षाम् उत्तीर्य मया वाराणस्याम् एव उदयप्रतापमहाविद्यालये प्रवेशो गृहीतः त्वया च प्रयागविश्वविद्यालये बी० ए० कक्षायां प्रवेशः प्राप्तः। अतएव आवां दूरस्थौ जातौ। अस्यां परिस्थित्यां पत्रव्यवहारः एव आवयोः समाचारज्ञानस्य सम्पर्कस्य च कृते एकः मार्गः वर्तते।

मित्र राकेश ! अहम् इच्छामि यत् कदाचित् त्वया सह भोजनं, शयनं, वार्तालापं विविधविषयसम्बद्धचर्चां च विधाय आत्मनः मनः तृप्तं करवाणि। अतएव आगामिनि ग्रीष्मावकाशे जूनमासे मम गृहम् आगम्यताम्, द्वित्राणि दिनानि च अवश्यं स्थीयताम्। तन्मध्ये पत्रमाध्यमेन यदाकदा त्वया स्मरणीयोऽहम्। पत्रोत्तरस्य प्रतीक्षायाम्।

तव सुहृद्

कुमुदः

## सरस्वतीपूजायाः निमन्त्रणम्

स्थानम्

दिनांकः

मान्यवर महोदय,

महता हर्षेण सह इदं निवेद्यते यत् अस्माकं विद्यालये श्वः पूर्वाह्ने सप्तवादनसमये सरस्वतीपूजायाः समारोहः आयोजितो वर्तते। पूजानन्तरम् एका सभा अपि समायोजिता भविष्यति यत्र बहूनां विख्यातविदुषां शिक्षा-विषयम् अवलम्ब्य भाषणानि भविष्यन्ति।

अस्मिन् अवसरे शुभागमनेन दर्शनदानेन च सर्वे अपि वयं विद्यार्थिनः अध्यापकाश्च अनुग्राह्या इति सविनयं निवेदयन्ते—

पूजासमितेः सदस्याः

## वार्षिकोत्सवस्य निमन्त्रणम्

स्थानम्

दिनांकः

मान्य-महानुभावाः

मन्ये, भवन्तः स्वस्थाः सानन्दाश्च स्युः। विशेषनिवेदनीयमिदं वर्तते यत् परश्वः सन्ध्यावेलायां मम संस्थानस्य वार्षिकोत्सवः संयोजितः वर्तते। अत्र भवतां शुभागमनं परमावश्यकं मत्वा निमन्त्रणपत्रम् इदं सादरं सबहुमानं च भवतां सेवायां प्रहीयते। कृपया यथासमयं सम्मिल्य उत्सवशोभा वर्धनीया छात्रेभ्यश्च शुभाः आशिषः प्रेरणाश्च प्रदेयाः इति नः सर्वेषाम् अपि साञ्जलि-निवेदनम्।

दर्शनाकांक्षिणः

__________

## सत्यनारायणव्रतकथायाः निमन्त्रणम्

स्थानम्

दिनाङ्कः

स्नेहभाजनेषु मित्रवर्येषु

सस्नेहं प्रणतयः

महतः सौभाग्यस्य आनन्दस्य च अयं विषयः वर्तते यत् मम कनिष्ठपुत्रः अपि ज्येष्ठपुत्रवत् एव आचार्यपरीक्षायाम्, एम० ए० परीक्षायां च सर्वेषु विषयेषु सर्वाधिकान् अङ्कान् प्राप्तवान्। एतेन कारणेन स न केवलं स्वकीये विश्वविद्यालये अपितु उत्तरप्रदेशे प्रथमश्रेणीं लब्धवान् अस्ति।

तस्य इमां सफलतां विशिष्टतां च उपलक्ष्य मम निवासस्थाने परश्वः सत्यनारायणव्रतकथायाः आयोजनं विहितं वर्तते।

मम पुत्रेण सह भवतः मैत्री पुरातनी घनिष्ठा च। अतः भवता एतस्मिन् उल्लासमये अवसरे अवश्यमेव उपस्थातव्यं मध्याह्न कालिकं भोजनं च अत्रैव विधातव्यम् इति मे हार्दिकी स्पृहा।

भवत्स्नेहाकांक्षी

---

## गृहप्रवेशविषयकं निमन्त्रणम्

स्थानम्

दिनांङ्कः

महामान्याः

आगामिनि बुधवासरे दिने दशवादनवेलायां समायोजिते गृहप्रवेशोत्सव-समारोहे भवतां शुभागमनं, परमप्रमोदावहं स्यात् इति भवन्तः सादरं सानुरोधं च आमन्त्र्यन्ते। अस्मिन् मङ्गलमये समये आयोज्यमानेषु सर्वेषु भोजनपानादिषु अपि भवताम् उपस्थितिः परमावश्यकी। यदि भवद्भिः सह भवतां पुत्रपौत्रादयः अपि आगच्छेयुः तर्हि अस्माकं सुमहान् प्रमोदः स्यात्।

भवदागमनप्रतीक्षायाम्

भवदीयः

# विवाहविषयकं निमन्त्रणम्



परमपूज्येषु आचार्यचरणेषु स्थानम्

सप्रश्रयं प्रणतिराशयः दिनाङ्कः

सविनय-निवेदनं च

विदितं भवतु भवतां यत् आगामिनि वैशाखमासे मम कनिष्ठभ्रातुः पाणिग्रहणसंस्कारः दिल्ली-निवासिनां श्रीशास्त्रिमहाभागानां सौभाग्य-कांक्षिण्या कन्यया सह सुनिश्चितः वर्तते। वरयात्रा इतः वाराणसीतः निर्दिष्टे दिने मध्याह्ने काशी विश्वनाथ एक्सप्रेसयानेन प्रस्थानं करिष्यति।

भवन्तः अपि यदि वाराणसीम् आगत्य अस्माभिः सहैव चलेयुः तर्हि भवतां सर्वविधं सौविध्यं स्यात् अस्माकं प्रसन्नता च। यदि इदं संभवति तर्हि पूर्वमेव आगमनसूचना प्रेषणीया येन याने भवताम् अपि कृते आरक्षणव्यवस्था विधीयेत। अन्यथा वरयात्रा-बहुले अस्मिन् काले आरक्षणं विना यात्रा कष्टबहुला असुरक्षिता च स्यात् इति आगमनसूचना अवश्यं प्रेषणीया। अथ च काशीं भवन्तः केन शकटेन कदा च आयास्यन्ति इत्यपि सूचनीयं येन भवताम् आनयनार्थं कश्चित् जनः यथाकालं शकटस्थानं प्राप्नुयात्।

भवताम् अन्यत्र क्वचिद् गमनं न स्यात् इति पूर्वमेव इदं पत्रं प्रेषितम्। कृपया दर्शनप्रदानेन अवश्यं वयम् अनुग्राह्याः इति सानुरोधं बद्धाञ्जलिः प्रार्थयते—

भवदीयः लघुशिष्यः

________________

## नामकरणसंस्कारस्य निमन्त्रणम्



स्थानम्

सम्माननीयेषु

दिनांकः

प्रणतिपूर्वकं निवेदनम्

इदं सूचयतः मम महान् हर्षः भवति यत् आगामिन्यां वैशाखशुक्ल दशम्यां गुरुवासरे प्रातः अष्टवादने मम पौत्रस्य नामकरणसंस्कारः भविता । अस्मिन् अवसरे सम्मिलिता भूत्वा भवन्तः शुभाशीर्वचनैः चिरंजीविनं कुमारं संवर्द्धयन्तु अस्मांश्च आह्लादयन्तु इति अस्माकं सर्वेषाम् अपि बलवती आकांक्षा ।

दर्शनाकांक्षी भावत्कः

________________

## मित्रगोष्ठ्यां सम्मिलनाय निमन्त्रणम्

श्रद्धेयाः शास्त्रिमहाभागाः

स्थानम्

दिनांकः

सादरं प्रणमामः

विदाङ्कुर्वन्तु भवन्तः यत् श्वः सायंकाले षड्वादनवेलायां मम निवासस्थाने एका मित्रगोष्ठी समायोजिता वर्तते यस्यां विविधेषु सामयिक-विषयेषु चर्चा भविष्यति । भवतां शुभागमनेन इयं गोष्ठी सविशेषं गौरवान्विता भविष्यतीति मम सर्वेषां मित्राणां विश्वासः । अतः यथासमयम् आगत्य अस्माकम् उत्साहः संवर्द्धनीयः इति—

सविनयं प्रार्थयते

________________

# पौत्रजन्मोत्सवे निमन्त्रणम्

स्थानम्

दिनांकः

आदरणीया बन्धुवर्याः,

सस्नेहं नमो नमः !

अद्य महता प्रमोदेन सह इदं पत्रं भवत्सेवायां प्रहिणोमि । जानन्ति एव भवन्तः यत् मम पुत्रस्य विवाहितस्य अनेकानि वर्षाणि व्यतीतानि परन्तु गतवत्सरावधि पौत्रस्य मुखं द्रष्टुं मम सौभाग्यं न जातम् । परं भगवतः भूतभावनस्य विश्वनाथस्य महता अनुग्रहेण विगतमासस्य पञ्चम्यां तिथौ शुभे लग्ने मम पौत्ररत्नस्य जन्म संजातं येन अस्माकं चिरप्रतीक्षिता आकांक्षा इदानीं पूर्ति गता हृदयस्य च महती चिन्ता अपगता ।

अस्य महोत्सवस्य उपलक्ष्ये आगामिनि गुरुवासरे मम निवासस्थाने एका प्रीतिगोष्ठी समायोजिता अस्माभिः । अस्मिन् प्रमोदभरे अवसरे आगत्य भवन्तः स्वकीयैः मङ्गलमयैः शुभाशीर्वादैः स्नेहसिक्तया दृष्टया च इमं शिशुं समनुगृह्णन्तु इति मे विनम्रा अभ्यर्थना । आशास्महे, दर्शनदानेन, भोजनपानादीनां सप्रेमसेवयेन, एकरात्रौ मम कुटीरे निवासेन च अस्मान् कृतार्थान् करिष्यन्ति ।

परिवारस्य सर्वे अपि सदस्याः महता औत्कण्ठयेन भवदागमनं प्रतीक्षमाणाः सन्ति प्रतिदिनं च दिनानि गणयन्ति । अस्तु ।

भवदीय—दर्शनप्रतीक्षायाम्

_______________

# गृहप्रवेशविषयकं निमन्त्रणम्

स्नेहसौजन्यमूर्तिषुश्रीशर्ममहोदयेषु — स्थानम्

सप्रश्रयं शतशत-प्रणामाञ्जलयः ! — दिनाङ्कः

विदितमस्तु तत्र भवतां यत् मम नवनिर्मिते भवने प्रवेशाय कार्तिकमासस्य शुक्लपक्षे नवम्यां तिथौ शुभमुहूर्तः निर्धारितः वर्तते । प्रारम्भिकपूजानन्तरं मध्याह्ने सार्धद्विवादनवेलायां वयं गृहे प्रवेशं करिष्यामः । अस्मिन् प्रवेशोत्सवे भवतां शुभागमनं सर्वथा समीहितं नः । यदि प्रवेशदिनात् पूर्वमेव भवन्तः आगच्छेयुः तर्हि अस्माकं महती सहायता स्यात् । यदि इदं संभवं न भवेत् तर्हि प्रवेशदिने प्रातः अवश्यमेव उपस्थातव्यं येन पूजाकर्मणि भवतां सहयोगः सुलभः स्यात् ।

भवतां वशंवदः

________________

# पुत्रस्य जन्मदिनोत्सवे निमन्त्रणम्

पूज्यचरणाः प्राचार्यमहोदयाः — स्थानम्

सादरं प्रणमामि ! — दिनांकः

मन्ये, मम पूर्वप्रेषितं पत्रं नूनं भवतां हस्तगतं भवेत् । तस्मिन् पत्रे भवन्तः मया स्वपुत्रस्य जन्मदिने आयोजितस्य वर्धापनस्य मङ्गलकृत्यानि वैदिकरीत्या सम्पादयितुं निमन्त्रिताः सन्ति । यदि इदं कृत्यं प्रातः एव समापितं स्यात् तर्हि भोजने कालातिपातः न जायेत । अतो भवद्भिः पूर्वरात्रौ एव निश्चितरूपेण आगन्तव्यम् इति मे हार्दिकी स्पृहा । अत्र कुशलिनः वयं सर्वे ।

आज्ञाकारी

________________

## उत्सवे अनुपस्थित्यै क्षमायाचना

स्थानम्
दिनांकः

सम्माननीयाः मन्त्रिमहाभागाः

अहं भवतः संस्थानस्य वार्षिकोत्सवे सम्मिलितो भवितुं न अशक्नवम् इति महतः खेदस्य विषयः अस्ति। परन्तु विवशता एव अत्र प्रधानं कारणं न तु मदीया उपेक्षा, प्रमादः अविनयः वा। एकस्याः घटनायाः अकस्मात् उपस्थानात् गृहे मम उपस्थितिः न केवलम् आवश्यकी अपितु अपरिहार्या जाता। तस्मादेव अहं भवदुत्सवे उपस्थातुं कृतनिश्चयः अपि उपस्थातुं न प्राभवम्। इदं भवता अन्यथा न कल्पनीयं क्षमाप्रदानेन च अनुकम्पनीयः अहम्। घटनायाः विस्तृतं विवरणं पश्चात् सूचयिष्यामि।

भवत्स्नेहाकांक्षी

__________



## महिलासंस्कृतसम्मेलने योगदानाय निवेदनम्

माननीयासु प्राचार्यमहोदयासु

स्थानम्
दिनांकः

इदं ज्ञात्वा भवत्याः परमः प्रमोदः भविष्यति यत् अस्य कन्यागुरुकुलस्य सर्वाभिः अपि कन्याभिः एकस्य महिलासंस्कृतसम्मेलनस्य आयोजनं विहितं वर्तते। परन्तु सम्मेलनस्य साफल्यं खलु केवलं भवत्याः सहयोगस्य उपरि एव निर्भरं विद्यते। अतः महिलानां गौरवावहे अस्मिन् समारोहे भवती अस्माकं मार्गदर्शनं करोतु तथा सर्वविध-सहयोग-प्रदानेन सम्मेलनं साफल्य-मण्डितं करोतु इति अस्माकं विनम्र-निवेदनम्।

भवदीयाः एव

__________

## कन्याविवाहोत्सवे निमन्त्रणम्

सम्माननीयाः बन्धवः, स्थानम्

प्रेयांसः सुहृज्जनाश्च दिनांकः

हर्षस्य अयं विषयः अस्ति यत् परमेश्वरस्य कृपया मम कनीयस्याः कन्यायाः विवाहः वाराणसीनिवासिना एकेन कुलीनेन, सुशिक्षितेन, लब्ध-जीविकेन च वरेण सह निश्चितः सञ्जातः। विवाहतिथिः आश्विनमासे शुक्लपक्षस्य दशमी वर्तते।

एतस्मिन् मङ्गलमये समये यथाकालं समागत्य स्वीकीयैः शुभाशीर्वचनैः कन्या वरश्च अनुग्रहीतव्यौ मण्डपस्य च शोभा वर्द्धनीया इति भवत्सेवायां विनम्रा मे अभ्यर्थना।

प्रणतिपूर्वकम्
भवदीयः

---

## गृहे आगमनाय निवेदनम्

माननीयाः शास्त्रिवर्याः स्थानम्

भूयांसि नमांसि दिनांकः

अद्य एकस्मिन् परमावश्यके विषये परामर्शाय अहं स्वकीये भवने भवतः शुभागमनं कामये। मन्ये, अद्य अवकाशहेतोः भवतः आगमने काऽपि बाधा न स्यात्। कृपया अद्य मध्याह्नकालिकं भोजनं मया सहैव कर्तव्यम् इत्यपि मे विनम्रा प्रार्थना।

भवदीयः प्रियबन्धुः

---

# उपनयनसंस्कारस्य निमन्त्रणम्

स्थानम्:

दिनांक:



सम्माननीया श्रीवैदिकमहोदयाः

श्रीमत्सु सादरप्रणतिपूर्वकं निवेदनम् !

विदितमस्तु भवतां यत् मम कनिष्ठपुत्रस्य उपनयनसंस्कारः आगामिन्यां चैत्र-शुक्ल-दशम्यां निर्धारितो वर्तते । उपनयसंस्कारः एव ब्राह्मणानां सर्वप्रमुखः संस्कारः इति मत्वा मया अस्य पुण्यकर्मणः सविधि-सम्पादनाय अनेके वैदिकाः विद्वांसः आमन्त्रिताः सन्ति । परन्तु भवताम् उपस्थितिं विना संस्कारस्य सुसम्पन्नता असंभवा एव । अतः श्रीमद्भिः निर्दिष्टसमये समागत्य संस्कारविधिषु सहयोगः कर्तव्यः तथा वटवे शुभाशिषः दातव्याः । मम मते यदि गायत्रीमन्त्रस्य दीक्षा भवद्भिः एव दीयेत तर्हि मम महती प्रसन्नता स्यात् वटोश्च ब्रह्मवर्चस्विता वर्द्धेत ।

उपनयनानन्तरं ब्रह्मचारी भूत्वा वटुः एकमासं भवत्समीपे स्थित्वा नियमपूर्वकं वेदाध्ययनं कुर्यात् इत्यपि मे बलवती इच्छा । यदि श्रीमतां काऽपि बाधा न स्यात् तर्हि भवन्तः सहैव वटुं स्वगृहं नयन्तु, सदाचारं शिक्षयन्तु तथा कांश्चित् वेदमन्त्रान् पाठयन्तु इति मे भवत्पादयोः नम्रनिवेदनम् ।

कृपाकांक्षी

__________

# कानिचित् स्फुटानि पत्राणि

## गुरवे कृतज्ञतापत्रम्

प्रातः स्मरणीयेषु परमपूज्येषु गुरुमहोदयेषु, स्थानम्

सश्रद्धं प्रणामाञ्जलयः विलसन्तु दिनाङ्कः

मान्याः !

अहम् अत्र भवतां शुभाशिषा कुशलपूर्वकम् अध्ययनरतोऽस्मि, तत्र भवतां कुशलतायै च परमात्मानं प्रार्थये। भवद्भिः मध्यमाकक्षापर्यन्तं मह्यं सरलतया श्रमेण च या शिक्षा प्रदत्ता तस्याः माध्यमेन सम्प्रति अत्र शास्त्रिकक्षायाः विषयाणाम् अवगमने महती सरलता भवति। एतदर्थं भवन्तं कदापि न विस्मरिष्यामि। यथा भवन्तः नियमितरूपेण परिश्रमेण च तत्र अध्यापयन्ति स्म तथा अत्रत्याः अध्यापकाः न अध्यापयन्ति। भवतां बोधनशैली अतीव सरला, सुबोधा सरसा च भवति स्म या कदापि न विस्मर्तुं शक्यते। किन्तु तत्र विद्यालये उच्चशिक्षायाः मान्यताभावात् मया विद्यालय-परिवर्तनं करणीयम् अभवत्। अन्यत् सर्वं समीचीनमस्ति।

परमपूज्यायाः मातुः कृते मे प्रणामाः अवश्यं वाच्याः। कृपया पत्रोत्तरस्य माध्यमेन शुभाशिषः अवश्यं प्रेषणीयाः। एवञ्च यथासमयं मम मार्गप्रदर्शनम् अपि निश्चितमेव करणीयम् इति पुनः पुनः अभ्यर्थये।

भवदीयः

कृपाकांक्षिशिष्यः



## पत्रिकायाः ग्राहकत्वाय निवेदनम्

मान्याः सम्पादकमहाभागाः स्थानम्

सादरं नमो नमः दिनांकः

भवतां पत्रिका मया यत्र तत्र बहोः कलात् पठचते । तस्याः महत्त्वपूर्णानां सरल-शुद्धभाषया लिखितानां लेखानां स्वाध्यायेन एव मम भाषाज्ञानं पूर्णं परिमार्जितं च जातम् इति अहं हृदयेन स्वीकरोमि । अतः सम्प्रति अहमपि अस्याः स्थायी ग्राहकः भवितुम् इच्छामि तदर्थं च धनादेशद्वारा सम्पूर्णं वार्षिकशुल्कं प्रेषयामि ।

मम उपरि लिखितेन सङ्केतेन यथासमयं पत्रिकां प्रेषयित्वा अनुकम्पनीयः अहमिति सविनयं निवेदये—

भवदीयः

________________

## पुस्तकक्रयणाय आदेशपत्रम्

मान्याः व्यवस्थापकमहोदयाः स्थानम्

________________ संस्थानम् दिनांकः

नवदेहली

सहर्षम् इदं सूच्यते यत् भवतः संस्थानात् प्रकाशितानि पुस्तकानि दृष्ट्वा मम महती प्रसन्नता जाता । कृपया मम नाम्न निम्नलिखितेन सङ्केतेन च निम्नाङ्कितानि पुस्तकानि वी० पी० द्वारा सम्यग् निभाल्य सुदृढं बद्ध्वा च त्वरितं प्रेषणीयानि । एकं सूचीपत्रम् अपि पुस्तकैः सह प्रेषयीयम् । इदं च नः सूचनीयं यत् पुस्तकानां मूल्ये प्रतिशतं कियान् अंशः भवद्भिः कमीशनरूपेण दीयते इति ।

भवदीयः

________________

## स्वागतसमारोहस्य सूचना

स्थानम् :

दिनांकः

परमस्नेहभाजः सुहृदः

सहाध्यायिनश्च

मम विद्यालये परश्वः सायंकाले केषाञ्चित् प्रदेशान्तरेभ्यः समागतानां संस्कृतविदुषां स्वागतार्थम् एका सभा समायोजिता वर्तते। अस्मिन् प्रसंगे संस्कृतशिक्षापद्धतिं संस्कृतप्रचारपद्धतिं च अवलम्ब्य कानिचित् सारगर्भितानि दिशानिर्देशकानि च भाषणानि अपि भविष्यन्ति। अवसाने मधुरपानस्य अपि व्यवस्था विहिता वर्तते।

अस्मिन् समारोहे भवन्तः सर्वेऽपि सम्मिलिताः भूत्वा सभायाः शोभां वर्द्धयन्तु स्वयं च लाभान्विताः भवन्तु इति अस्माकं भूयो भूयो निवेदनम्।

सस्नेह-प्रणतिपूर्वकम्

भवदीयाः

__________

## पाक्षिकसभार्थं सूचना

विद्यालयस्य सर्वे अध्यापकाः छात्राश्च सूच्यन्ते यत् आगामिनी पाक्षिकी सभा चैत्र-शुक्ल-त्रयोदश्यां समायोजिता वर्तते। भाषणार्थं "संस्कृतभाषा अन्यभाषापेक्षया सरला कठिना वा" इति विषयः निर्धारितः अस्ति। सभायां सर्वेषामपि उपस्थितिः नितान्तम् अनिवार्या भविष्यति।

प्राचार्याणां निर्देशानुसारं

व्यवस्थापकः

__________

# संस्कृत के प्रारंभिक

## कार्यालय द्वारा प्रकाशित कु

| | | |
|---|---|---|
| १—सुगम-शब्दरूपावलि: | | |
| २—सुगम-धातुरूपावलि: | | |
| ३—बाल-संस्कृतम् | | |
| ४—बाल-कवितावलि: ( हिन्दी संस्कृ | | |
| ५—बाल-कवितावलि: ( केवल संस्कृ | | |
| ६—संस्कृत-सम्भाषणम् | | |
| ७—बाल-शब्दकोश | | |
| ८—सरल-संस्कृत गद्यसंग्रह: | .... | ४—०० |
| ९—सरल-संस्कृत पद्य संग्रह | ... | ४—०० |
| १०—छात्रोपयोगी हिन्दी-संस्कृत-शब्दकोश | ... | ३—७५ |
| ११—संस्कृत वाक्य संग्रह | ... | ०—६० |
| १२—वर्णमाला-गीतावलि: | ... | २—१० |

## कुछ मनोरंजक पुस्तकें

| | | |
|---|---|---|
| १—ललित मञ्जुलम् | .... | १—५० |
| २—संस्कृत गान माला | ... | १—१० |
| ३—कौत्सस्य गुरुदक्षिणा | ... | ०—७५ |
| ४—भोजराज्ये संस्कृत साम्राज्यम् | .... | १—०० |
| ५—भारत राष्ट्रगीतम् | ... | १—०० |
| ६—बाल-नाटकम् | ... | १—५० |
| ७—बाल-विनोदमाला | ... | १—५० |
| ८—संस्कृत प्रहसनम् | ... | १—२० |
| ९—स्वर्गीय संस्कृत कवि सम्मेलनम् | ... | १—०० |

व्यवस्थापक

**सार्वभौम संस्कृत प्रचार कार्यालय**

डी० ३८/११० हौजकटोरा, वाराणसी